# AITAREYA BRĀHMAṆA-ĀRAṆYAKA KOṢA

## ऐतरेय ब्राह्मण-आरण्यक कोषः ।



"—I have gone through the Dictionary very carefully and I am glad to testify to the accuracy of the information and the references contained therein which is not surprising in view of the fact that the learned author has in the course of a long life of scholarship specialised in the compilation of similar material and the publication of important reference books with regard to Vedic Literature Mīmāṁsā and Darśana The book will not only be useful to students of the Brāhmaṇas and the Āraṇyakas but also to Sanskrit scholars in general The information under each major entry has been given in the words of the Brāhmaṇa or the Āraṇyaka itself and is easily assimilated in the context given I congratulate the publisher on publishing such a useful work which should find appreciation on the part of all scholars and particularly scholars of Vidic Literature "

**S M Katre**
M A Ph D (London)
*Director Deccan College Post Graduate & Research Institute Poona*



Price Rs Eight only

First Edition 1952.

EDITED BY

KEVALĀNANDA SARASWATĪ

# निवेदन

श्री स्वामी केवलानंद ह्यानीं बरेंच लेखनकार्य केलेलें मला माहीत होतें. तें लेखन प्रकाशित करण्याला कोणी पुढें येत नाहीं हें पाहून मला वाईट वाटे. स्वामी तर बोलून-चालून अकिंचन. तेव्हां एक पुस्तक आपण छापून काढावें असें मनात आलें व त्याप्रमाणें स्वामींना मीं आपली इच्छा कळविली. ऐतरेय ब्राह्मण व आरण्यक कोष तयार होता तो त्यानीं माझ्या हवालीं केला. त्याला बहुत काल लोटला. सवडीप्रमाणें छापखान्यानें छपाईचें काम करावें अशी माझी इच्छा होती. परंतु ह्या ना त्या कारणानें काम रेंगाळत राहिलें. स्वामींनीं एकदाहि केव्हा छापता म्हणून विचारपूस केली नाहीं. मला मात्र रुखरुख वाटत होती. त्यांच्या सत्काराची योजना पुढें आलेली ऐकतांच हा मोका साधावा असा निश्चय करून आमच्या आर्यसंस्कृति मुद्रणालयाला काम करावयास लावलें. स्वामींनीं हस्तलेख तपासून दिला व श्री. चिंतोपंत कर्वे यानीं मुद्रितें तपासलीं. त्यामुळें ग्रंथ वेळेवर छापून झाला. ह्याचा मला आनंद होत आहे.

स्वामींच्या ग्रंथाबद्दल बोलण्याचा मला अधिकार नाहीं. त्यांची अधिकारसंपन्नता प्रसिद्ध आहे.

सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ।

बदलापूर, कार्तिक व॥ ११
शके १८७४.

ना. गो. चापेकर

---



वडिलांच्या सदिच्छेप्रमाणें स्वामींचा हा कोष आमच्या मुद्रणालयाचें प्रकाशन म्हणून घेण्यास फार आनंद वाटत आहे.

म. ना. चापेकर,
प्रकाशक, आर्यसंस्कृति मुद्रणालय, लि०.

ॐ नमो महिदासाय ऐतरेयाय ।

# प्रस्तावः

' ऋग्वेदोऽथ यजुर्वेदः सामवेदः ' इति त्रयीमाचक्षते । अथर्वणस्य चतुर्थस्य यज्ञे प्राधान्याभावात् देशान्तरे वा विद्यमानत्वात् कार्यभिन्नोऽसौ संगृहीतोऽभूत् प्राचीनतमे काले इत्यैतिहासिकाः । तत्र ऋग्वेदस्य एकविंशतिः शाखा भवन्तीति व्याकरणभाष्यकारः 'एकविंशतिधा बाह्वृच्यं ' इति पस्पशायां प्रतिपेदे ।

( १ ) अथ आश्वलायनगृह्यसूत्रे ब्रह्मयज्ञाङ्गाचार्यतर्पणे माण्डूकेयगणः सांख्यायनगणः आश्वलायनगणश्चेति गणत्रयमुक्तम् । तत्र माण्डूकेयगणे जानन्तिः, बाहविः, गार्ग्यः, गौतमः, शाकल्यः, बाभ्रव्यः, माण्डव्यः, माण्डूकेयश्चेति अष्टौ आचार्या उक्ताः । सांख्यायनगणे कहोडः, कौषीतकः, महाकौषीतकः, पैङ्ग्यः, महापैङ्ग्यः, सुयज्ञः, सांख्यायनः इति सप्त आचार्याः । आश्वलायनगणे च ऐतरेयः, महैतरेयः, शाकलः, बाष्कलः, सुजातवक्त्रः, औदवाहिः, महौदवाहिः, सौजामिः, शौनकः, आश्वलायनश्च इति दश आचार्याः । एतद्गणत्रयसंकलनया पञ्चविंशतिराचार्या भवन्ति इति संप्रदायः ।

( २ ) अत्रेदमालोचनीयं कहोडः कौषीतकश्चेति भिन्नौ एक एव वेति, एवं सुयज्ञः सांख्यायनः इत्यत्रापि । तत्र भिन्नाविति प्राप्तं, गार्ग्यनारायणेन ' त्रयोविंशतिवाक्यानि, कहोडादिषु अर्थात् तर्पयामिशब्दः कार्यः ' इत्युक्तत्वात् ( आश्वगृ० ३।४।४ ), हरदत्तेनापि ' कहोडमित्यादिषु द्वितीयानिर्दिष्टेषु तर्पयामि इति भवति, ' कहोडं तर्पयामि इति ' इत्युक्तत्वात् । कहोडकौषीतकयोः सुयज्ञसांख्यायनयोश्च भेदाभावे उक्तसंख्यापूर्तेरभावप्रसङ्गात् इति । अत्रोच्यते । बृहदारण्यकोपनिषदि ( ३।५ ) ' अथ हैनं कहोडः कौषीतकेयः पप्रच्छ ' इत्युपक्रम्य ' ततो ह कहोडः कौषीतकेय उपरराम ' इत्युपसंहृतम् । अत्र ' विकर्णकुषीतकात् काश्यपे ' ( पा० ४।१।१२४ ) अपत्ये ढक् कौषीतकेयः, अन्यः कौषीतकिः ' अत इञ् ' ( पा० ४।१।९५ ) । सांख्यायनगृह्यसंग्रहे कौसुम्भवास्तव्यपण्डितवरवासुदेवविरचिते चतुर्थाध्याये उदकतर्पणप्रकरणे ' कौषीतकिः, महाकौषीतकिः ' इत्येवोदाहृतम् । यद्यपि सांख्यायनगृह्यसंग्रहपुस्तके एव अन्ते चौखम्भाया १९०९ सने मुद्रिते संग्रहमूलभूते कौषीतकिसूत्रे ' कौषीतकी, महाकौषीतकी इति दीर्घः पठ्यते', तथापि व्याकरणविरोधात् संग्रहविरोधाच्च दीर्घपाठः अपपाठः एवेति स्वीकर्तव्यम् । अथ ' कौषीतकं ' इति आश्वलायनीयः पाठः कथमिति चेत्, ' छन्दसि सर्वे विधयो विकल्प्यन्ते ' इति ' छन्दोवत् सूत्राणि भवन्ति ' इति च न्यायाभ्यां अतइञमकृत्वा औत्सर्गिकेण ' तस्यापत्यं ' ( पा० ४।१।९२ ) इत्यणैव स पाठः साधनीयः, शिवादेराकृतिगणत्वाद्वा सिद्धम् । सर्वथाऽपि कुषीतकपुत्रः कहोडः इति सिध्यति । तेन कहोडः कौषीतकः नाम कुषीतकपुत्रः कहोडः इति एक एवायमाचार्यः आश्वलाचार्येण उक्त इति । एवमेव सुयज्ञसांख्यायनविषयेऽपि ज्ञेयम् । तथाहि । शाङ्खायनश्रौतसूत्रीयः आनर्तीयभाष्यकारः ' बार्हतराथंतरं, वषट् कुर्यात् पुरस्ताद्दीर्घमुपरिष्टात् ह्रस्वम् ( १।२।१८ ) इत्यत्र स्वमतस्थापनार्थं सुयज्ञाचार्यः श्रुतिमुदाजहार ' इत्याह, ( श्रुतिश्चेयं कौब्रा. ३।५ ) । एकादशाध्याये च प्रस्तावे ' द्वादशाहशेषं परिभाषा चोक्त्वा प्रक्रमते भगवान् सुयज्ञः सूत्रकारः ' इत्याह । तस्मात् सुयज्ञोऽयमाचार्यः शाङ्खायनसूत्रकारः इति स्पष्टम् । आश्वलायनगृह्ये आचार्याणां नामानि येन क्रमेण पठितानि, न तेनैव क्रमेण कौषीतकिगृह्यसूत्रे वा सांख्यायनगृह्यसंग्रहे वा पठितानि । आश्वलायनीये च गणत्रयं यथा स्पष्टमवगम्यते, न तथा कौषीतकिगृह्ये वा सांख्यायनगृह्यसंग्रहे वा शक्यमवगन्तुम् । परंतु कहोडकौषीतकपदयोः यथा अव्यवधानेन आश्वलायनीये पाठः, तथैव इतरत्रापि कहोडकौषीतकिपदयोः अव्यवधानेनैव पाठः, एवं सुयज्ञसांख्यायनयोः अव्यवधानं यथा आश्वलायनीये, तथैव सुयज्ञसांखायनयोः । इतरत्रापि । तेन सर्वथाऽपि

कहोडकौषीतकौ कहोडकौषीतकी वा एकैव व्यक्ति । तत्र कहोड इति स्वनाम, कौषीतक इति अण्प्रत्ययान्त, कौषीतकि इति इजन्त वा पितृनाम इति विशेष । एव सुयज्ञसाख्यायनौ सुयज्ञशाङ्खायनौ वा एकैव व्यक्ति इति सिद्धान्त ।

(३) अथ साख्यायनशाङ्खायनशब्दविचार । आश्वलायनीयाचार्यतर्पणे साख्यायनशब्द एव पठित, न शाङ्खायनशब्द, कौषीतकिसूत्रे शाङ्खायनशब्द एव पठित, न तु साख्यायनशब्द । गृह्यसंग्रहेऽपि तर्पणे शाङ्खायनशब्द एव पठित, परतु ग्रन्थनाम 'साख्यायनगृह्यसग्रह इति, न तु शाङ्खायनगृह्यसग्रह इति' । किं च ग्रन्थादौ 'श्रीसाख्यायनगृह्यस्य दाक्षितश्रेष्ठसूनुना । कृतैषा पद्धतिर्व्याख्या शिष्याणा हितकाम्यया ॥' इति श्लोकौ ग्रन्थकारीय । एव चतुर्ष्वप्यध्यायेषु अन्ते 'इति आङ्गिरसविषये कौसुम्बरवास्तव्यश्रीवासुदेवकृते साख्यायनगृह्यसग्रहे अमुकोऽध्याय इति समाप्तिसकल्प । कौषीतकिगृह्यसूत्रान्ते च 'इति शाङ्खायनशाखाया कौषीतकिगृह्यसूत्रे षष्ठोऽध्याय' इति मुद्रितम् । एतावता साख्यायन शाङ्खायनश्चेति किंचिदक्षरभेदेऽपि व्यक्तिरेकैव, न भिन्ने । उच्चारणभेदात्तु शब्दभेद इति निश्चिनुम ।

(४) अथ ऋग्वेदीयचरणव्यूहस्य महिदासकृताया वृत्तौ 'जानन्ति शाङ्खि इत्यारभ्य माण्डूकेया इत्यन्त माण्डूकेयगण । गार्गी वाचक्नवी इत्यारभ्य साख्यायन इत्येवमन्त साख्यायनगण । एतेषा कौषीतकिब्राह्मणमारण्यक च साख्यायनसूत्र च । ऐतरेय इत्यारभ्य आश्वलायनान्त आश्वलायनगण । एषामैतरेयब्राह्मणमारण्यक च आश्वलायन सूत्र च' इत्युक्तम् । अनेन महिदासेन वृत्त्यन्त 'त्रिदशाङ्कधरामिते गतेऽब्दे मधुमासे दशमी तिथौ सुधाशौ । महिदास बुध परोपकृत्यै चरणव्यूहमिम व्यकारि काश्याम् ॥' इत्यनेन वृत्तिपूर्तिकाल उक्त । काश्यामित्युक्तत्वात्तत्रापि तदुक्तोऽब्द शालिवाहनशकाब्द एव । शक १६१३ चैत्रकृष्ण दशमी इन्दुवासर इति स काल इति श्री शकर नारायण वत्सजोशी इतिहाससशोधका शकावली दृष्ट्वा कथयन्ति ।

(५) तत्र साख्यायन शाङ्खायनापरपर्याय एक आश्वलायनश्चापर इति द्वौ आचार्यौ कल्पसूत्रकारावेव, न ब्राह्मणकारौ । इतरे तु आचार्या ब्राह्मणारण्यककारा । यच्चेद शाङ्खायनब्राह्मण शाङ्खायनारण्यक इति च मन्यते तत् वस्तुत कौषीतकिब्राह्मण कौषीतकिआरण्यकमेव स्यात् । नहि ब्राह्मणकार एव सूत्रकार इति वक्तु शक्यमिति ।

(६) कहोड कौषीतक एकैव व्यक्ति, सुयज्ञ साख्यायनश्च एकैव व्यक्ति इत्युक्त प्राक्, शाङ्खायनः आश्वलायनश्चेति द्वावेतौ कल्पसूत्रकारावेव, न ब्राह्मणकारौ इति च इदानीमेवोक्तम् । एव सति आश्वलायनशाखोक्त नामाचार्याणा यथाश्रुतानुसारिकल्पनया या पञ्चविंशति सख्या, सा इदानीं चतुर्भिर्न्यूना सती एकविंशतिर्भवति । तदेव च 'एकविंशतिधा बाह्वृच्य' इति व्याकरणमहाभाष्यकारेणोक्तम् । कहोडकौषीतकयो सुयज्ञशाङ्खायनयोश्च व्यक्तिभेदे शाङ्खायनाश्वलायनयो ब्राह्मणारण्यककारत्वे च स्वीकृते महाभाष्यकारोक्तिरिय नैव सगच्छेत ।

(७) माण्डूकेय नाम प्रथमगणस्य आचार्य अन्तिम ब्राह्मणकार इति स्वीकार्यमेव । अत एव ऐतरेयारण्यकस्यसहितोपनिषदि सहितोपासनाप्रतिपादने महर्षिभेदेन उपासनाविषयविशेषप्रतिपादनावसरे 'पृथिवी पूर्वरूप, द्यौरुत्तररूप, वायु सहिता इति माण्डूकेय' इत्याद्युक्त्वा 'इति नु माण्डूकेयानाम्' इत्युपसहार कृत सगच्छते । परतु शांख्यायनगृह्यसग्रहो नाम चौखम्बायां १९०९ सने यत् पुस्तक मुद्रित तदन्ते अध्यायषट्कात्मक कौषीतकिगृह्यत्वेन यत् सूत्र मुद्रित, तत्र उपाकरणप्रकरण 'प्र गृच जुहुयादिति हैक आहु, सूक्तानुवाकाद्याभि इति वा । अध्यायार्षपाद्याभिरिति माण्डूकेय । अथ ह स्माह कौषीतकि अग्निमीळे पुरोहितमित्येका' इत्युक्तम् । अत्र निर्दिष्टो माण्डूकेय सूत्रकार एवेति स्पष्टम् । उपाकरणादिप्रतिपादन हि सूत्रकारस्यैव कृत्य, न ब्राह्मणारण्यककारस्य इति । परतु किंचित् सकल्पना पुरत प्रादुर्भवति, कथ ब्राह्मणकार सन् माण्डूकेय सूत्रकार स्यादिति । तस्मात् सकटादुन्मोकस्तु अतिप्राचीनो माण्डूकेय कश्चित् ब्राह्मणकार स्यात्, ततोऽर्वाचीनस्तु कश्चित् माण्डूकेय सूत्रकार स्यात्, इति स्वीकार्यं गत्यन्तराभावात् । माण्डूकेयसूत्र तु ब्राह्मणमिव दृश्यम् ।

एवं कौषीतकिविषयेऽपि । शाङ्खायनब्राह्मणारण्यकत्वेन आनन्दाश्रममुद्रिते ग्रन्थे 'तदुह स्माह कौषीतकिः' (२।९, ७।४, ७।१० इ०) इति बहुवारमुपलभ्यते । 'इति कौषीतकं' (३।१ इ०) इति च । ऐतरेयब्राह्मणेऽपि 'पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्यं, उत्तरामिति कौषीतकं' इति वाक्यं दृश्यते (३२।९।२) । तच्च आनन्दाश्रमीये शाङ्खायनब्राह्मणेऽपि (३।१) अविकृतमुपलभ्यते । तेन कौषीतकः कौषीतकिर्वा ब्राह्मणकारः इति स्पष्टम् । यच्चेदं कौषीतकिगृह्यसूत्रमितिवदन्ति, न तत् वस्तुतः कौषीतकप्रणीतं सूत्रं, किंतु शाङ्खायनप्रणीतमेव सत् कौषीतकिब्राह्मणारण्यकानुसारित्वात् कौषीतकिसूत्रमिति प्रसिद्धिः काचित्की । तथा च ब्राह्मणमारण्यकं च कौषीतकं, श्रौतं गृह्यं च सूत्रं शाङ्खायनकं इति सिद्धम् ।

(८) अथ पैङ्ग्यं कौषीतकं चेति ब्राह्मणारण्यकद्वयं कौषीतकिब्राह्मणे आनन्दाश्रमे शाङ्खायनत्वेन मुद्रिते ऐतरेयब्राह्मणे च स्पष्टतयोल्लेखात् सिध्यति । यत्तु तत्र शाङ्खायनब्राह्मणं शाङ्खायनारण्यकमिति च मुद्रितं, आरण्यकप्रस्तावनायां च तथा साधितमिव तत्तु आपाततः । नहि सूत्रकार एव ब्राह्मणकारः इत्यस्य अवश्यवक्तव्यत्वात् । शांखायनश्रौतसूत्रीये आनर्तीयभाष्ये च (१०।१०।१) 'महाकौषीतकिब्राह्मणाभिप्रायेण नाम्ना धर्मातिदेशः इति तद्धर्मप्राप्तिः' इत्युक्तत्वात् महाकौषीतकिब्राह्मणमपि आनर्तीयभाष्यकाले उपलब्धमासीत् । ऐतरेयं ब्राह्मणारण्यकं तु इदानीं कण्ठस्थमेव । तथा च माण्डूकेयं, पैङ्ग्य, कौषीतकं, महाकौषीतकं, ऐतरेयं चेति पञ्चविधं ब्राह्मणं सिद्धमेव । तेन यावन्त आचार्यास्तावन्ति ब्राह्मणारण्यकानि इति सिद्धान्तयामो वयम् । तत्र ब्राह्मणद्वयमेवेदानीमुपलभ्येत आश्वलायनशाङ्खायनौ च कल्पसूत्रकारावेव, न ब्राह्मणकारौ । शाङ्खायननाम्ना कैश्चित् घुष्यमाणं तु ब्राह्मणारण्यकं न शाङ्खायनकं, किंतु कौषीतकमेव तत् ।

यत्तु मह्यो देशे काले च वाजसनेयिनः आश्वलायनीयमेव हौत्रं स्वीकुर्वन्ति, तत् शाङ्खायनीयहौत्रवेत्तॄणामलाभात् आश्वलायनीयानां च सुलभत्वात् । वस्तुतस्तु कृष्णयजुर्वेदिभिः आश्वलायनीय हौत्र स्वीयाभावे यथा स्वीकार्यं, तथा शुक्लयजुर्वेदिभिः स्वीयहौत्राभावे शाङ्खायनीयमेव हौत्रं स्वीकार्यं नाश्वलायनीयम् । शाकलसंहिता ऐतरेय ब्राह्मणारण्यकं आश्वलायनसूत्रं चेति एका त्रयी आश्वलायनानां कृष्णयजुर्वेदिना च स्वीकारार्हा । बाष्कलसंहिता कौषीतकं ब्राह्मणारण्यकं शाङ्खायनसूत्रं चेति द्वितीया त्रयी शाङ्खायनानां शुक्लयजुर्वेदिना च हौत्रविषये स्वीकारार्हा इति सिद्धान्त इति च ऋग्वेदीयचरणव्यूहस्य महिदासप्रणीते भाष्ये स्पष्टम् ।

(९) अथ संहिता । एकविंशतिधा बाह्वृच्य इति भगवत्पतञ्जलिवचनात् एकविंशतिराचार्याः तेषां एकविंशतिः संहिताः, एकविंशतिरेव ब्राह्मणारण्यकानि चेति ज्ञायते । न च ताः संहिताः सर्वथा अक्षरशो भिन्नाः बभूवुः, किंतु क्वचिदक्षरभेदः क्वचित् पदभेदः, क्व चित् ऋचा न्यूनाधिकत्वं, पौर्वापर्यभेदश्चेति तत्तत्सम्प्रदायभेदात् भेदः । यथा शाकलसंहितायां वालखिल्यसंज्ञकानि एकादश सूक्तानि न सन्ति, द्वादशाहानुष्ठानोपयोगित्वात्तु वैदिकैः खिलत्वेन पठ्यन्ते । विशेषत उपयोगात्तु पदपाठक्रमपाठसर्वानुक्रमसहितानि पठ्यन्ते । (ऋसं. ८।४९-५९) । तानि तु बाष्कलसंहिताऽन्तर्गतानि तत्रापि अन्तिमानि द्वित्राणि न बाष्कलेऽप्यन्तर्भवन्ति । शाकलके 'समानी व आकूतिः' इति अन्तिमा ऋक्; बाष्कलके तु 'तच्छंयोरावृणीमहे' इति अन्तिमा ऋक् । इति दिक् । अधिकं तु चरणव्यूहस्य महिदासभाष्ये द्रष्टव्यम् । आसु संहितासु महता कालेन पाठकलोपात् भूयस्यः संहिता लुप्ताः स्युः, तिस्रस्तु अवशिष्टाः । ताश्च प्राक् ये त्रयो गणाः माण्डूकेयगणः शाङ्खायनगणः आश्वलायनगणः इत्युक्ताः, तेषां तास्तिस्रः संहिता बभूवुः । पुनश्च माण्डूकेयगणस्य संहिता लुप्ता । अवशिष्टे तु द्वे बाष्कलसंहिता शाकलसंहिता चेति । 'शाकला बाष्कला दोनी' इति मराठीभाषामयगुरुचरित्रे वेदशाखाविचारप्रस्तावे प्रतिपादितम् । तच्च विरोधाभावात् प्रमाणमेव । शाङ्खायनश्रौतसूत्रीये आनर्तीयभाष्ये (१।२।५) 'बाष्कलानामप्रगृह्यः, तदर्थं वचनं' इत्युक्तम् । तेन शाकलसंहितायाः भिन्ना या गुर्जरदेशे ऋग्वेदीया द्वितीया संहिता उपलभ्यते सा बाष्कलसंहितैव । बाष्कलसंहिता कौषीतकिब्राह्मणारण्यकं च शाङ्खायनसूत्राधारः इति निश्चयोऽस्माकम् ।

(१०) 'अथैतस्य समाम्नायस्य विताने योगापत्तिं वक्ष्यामः' इति आश्वलायनश्रौतसूत्रगतं प्रथमसूत्रस्य व्याख्यानावसरे 'एतस्य इति शब्दः निवित्प्रैषपुरोरुक्कुन्तापवालखिल्यमहानाम्न्यैतरेयब्राह्मणसहितस्य शाकलस्य

(२१) अथ ग्रन्थादिसंक्षिप्ताक्षराणि तद्विवरणं च ।

ऋसं.—ऋक्संहिता पण्डितसातवळेकरैः औन्धराजधान्यां मुद्रिता । तत्र मण्डलं सूक्तं ऋक् इत्यङ्कत्रयम् ।

ऐआ.—ऐतरेयारण्यकं आनन्दाश्रममुद्रितम् । आरण्यकं-कंसस्थखण्डं-सूत्रं इत्यङ्कत्रयम् ।

ऐब्रा.—ऐतरेयब्राह्मणम् । अयं संक्षेपः आदौ एकदैव निवेशितः । उत्तरत्र सर्वत्र तु यत्र इतरत् किंचिदक्षरं अङ्कतः प्राङ्नास्ति तत्र आधिकारिकः ऐब्रा. इति संक्षेपोऽस्त्यवेति ज्ञेयम् ।

जै.—जैमिनिमीमांसा अध्यायः पादः अधिकरणं सूत्रं चेति अङ्कचतुष्टयम् ।

द्र०— द्रष्टव्यं इत्यर्थः ।

पा० – पाणिनिः अध्यायः पादः सूत्रं इत्यङ्कत्रयम् ।

प्रयोग— याज्ञिकप्रयोगानुसारेण इत्यर्थः ।

सायणः—सायणभाष्यम् ।

सौत्रं—सूत्रोक्तमित्यर्थः

स्वामी केवलानन्दसरस्वती.

। ॐ नमो गुरुभ्यः ।

# ऐतरेय ब्राह्मण-आरण्यक कोषः ।

अक्षरपङ्क्तिः—सु मद् पद् वग् दे इति पञ्च अक्षराणि ।

एतानि होतृजपादौ प्रयोक्तव्यानि । अग्निष्टोमे आज्य शस्त्रस्य होतृजपे इयमक्षरपङ्क्तिः पठ्यते । ऐब्रा ८।६।२.

अक्षरादिध्यानानि- ऊष्माणः स्पर्शाः स्वराः अन्तस्थाः इत्यादीनामुपासनाः । एका ऐआ ३।७, द्वितीया ३।८, तृतीया ३।९।१-२२, चतुर्थी ३।११।१-२.

अग्नयः आरण्येन अग्निना संदह्येरन् तदा झटिति समारोपयेत् अरण्योरात्मनि वा । तदसंभवे अरणी गृहीत्वा पलायेत । गार्हपत्यादाहवनीयाद्वा उल्मुकं गृहीत्वा पलायेत । तस्याप्यसंभवे अग्नये सवर्गाय अष्टाकपालं निर्वपेत् । कुवित्सुनो गविष्टये० मानो अस्मिन् महाधने० इति याज्यानुवाक्ये । आहुतिं वा आहवनीये जुहुयात् अग्नये संवर्गाय स्वाहा इति । (पुनराधानपूर्वकं दर्शपूर्णमासान्तं कृत्वा ततः इयमिष्टिः आहुतिर्वा कर्तव्या इति केचित्) ३२।७।४.

अग्नयः ग्राम्येण अग्निना संदह्येरन् तदा प्रायश्चित्त = अग्नये सवर्गाय अष्टाकपालं निर्वपेत् । कुवित्सुनो गविष्टये० मानो अस्मिन् महाधने० इति याज्यानुवाक्ये । आहुतिं वा आहवनीये जुहुयात् अग्नये संवर्गाय स्वाहा इति । ३२।६।१.

अग्निं नरो दीधितिभिररण्योः इति पञ्चविंशत्यृचं आज्यशस्त्रं महाव्रते अन्नाद्यकामस्य । तत्र । १-१८ ऋचः विराट्छन्दस्काः । १९-२५ त्रिष्टुभः । त्रिः प्रथमामन्वाह त्रिरुत्तमाम् । ऐआ १।२।१-१२.

अग्निं नरो दीधितिभिः इति पञ्चविंशत्यृचं यत् विश्वजिति आज्यशस्त्रं तदपि महाव्रते वैकृतं द्वितीय आज्यशस्त्रं । प्रवोदेवायाग्नये इति च सप्तर्चं प्राकृतं इति द्वे इति केचित् । तत्र । ऐआ १।१।३.

अग्निं नरो दीधितिभिः इति विश्वजिति महाव्रते चाज्यशस्त्रम् । ऐ आ ५।१।४

अग्निं पुरस्ताद्धरन्ति शामित्रदेशे पशौ नीयमाने. ६।६।८-१०.

अग्निः देवता पृष्ठ्ये षडहे प्रथमेऽहनि । २०।१।१-२.

अग्निः वायोः सकाशाज्जायते, प्राणाद्धि बलात् मथ्यमानोऽपि जायते । ४०।५।१२.

अग्निप्रणयनीया ऋचः । अग्निष्टोमे सोमक्रयोत्तरम् । प्रैषः । ५।२।१। ब्राह्मणस्य गायत्री प्रथमा । २-३। राजन्यस्य त्रिष्टुप् प्रथमा । ४-९। वैश्यस्य जगती प्रथमा । १०-१२।मन्द्रस्वरेण प्रथमा,द्वितीयायामनुष्टुभि उपांशुत्यागः ।१३-१६। अष्टमी परिधानीया । ३७ ४०। त्रिः प्रथमा त्रिरुत्तमा । ४१। उत्तरवेद्या सभाराः । २८.

अग्निमन्थनं । ३।४।६, ३।५।१-४४ । आतिथ्यायां चातुर्मास्येषु च । १४।२।६.

अग्निमन्थनीया ऋचः त्रयोदश । प्रैष 'अग्नये मथ्यमानायानुब्रूहि इत्यध्वर्युः । ३।५।१. अभित्वादेव०' सावित्री। २-४। त्वामग्ने पुष्करादधि० तृचमाग्नेयं गायत्रं। ७-८ । यदि न जायेत यदि वा चिरं जायेत राक्षोघ्न्यः गायत्र्योऽनूच्याः अग्ने हंसि न्यात्रिणं० इत्येताः।३।५।९-१२. राक्षोघ्न्या एकस्यां द्वयोर्वाऽनूक्तयोरेव यदि जायेत 'उत ब्रुवन्तु जन्तवः०' इत्यनुब्रूयात् । १३-१४। आ यं हस्ते न खादिनं०। १५-१९। प्रदेवं देववीतये० प्राक्रियमाणायाभिरूपा। २०-२३। आजातं जात० । २४-२७। अग्निनाऽग्निः समिध्यते। २८-२९ । त्वं ह्यग्ने अग्निना।

३०–३२। तं मन्थेयन्त। ३३–३४। यज्ञेन यज्ञमयजन्त इति परिधानीया। ३५–३९। मथितस्याग्नेः अग्नौ प्रहरणे प्रदेव देववीतये। ४०–४१। त्रिः प्रथमा त्रिरुत्तमामन्वाह। ताः सप्तदश सम्पद्यन्ते। ४२–४४.

अग्निर्नेता ऋक् मरुत्वतीये शस्त्रे धाय्या महाव्रतादौ। ऐआ १।५।७.

अग्निर्वै उद्वान् वायुमनुप्रविशति। सोऽन्तर्धीयते। ४०।५।१०,

अग्निवती इष्टिः 'उद्दरणे' इत्यत्र द्र०। ३२।५।१।

अग्निविहरणं धिष्ण्येषु। आग्नीध्रादेव सदसि अग्नीन् विहरन्ति। १०।४।२.

अग्निषु अन्तरागमने प्रायश्चित्त तदपवादश्च 'अन्तरागमने' इत्यत्र द्र०। ३२।२१।३,७.

अग्निष्टोमः १-१५ अध्यायेषु प्रतिपादित. उत्तरत्रापि केचिद्विशेषाः उच्यन्ते। अथ प्रयोगपुस्तकानुसारेण अग्निष्टोमस्य हौत्रविषये रूपरेखा उच्यते। सोमप्रवाकः। वरणम्। मधुपर्कः। दीक्षणीया। प्रायणीया। सोमक्रयः। आतिथ्या। तानूनप्त्रम्। आप्यायनम्। निह्नवः। प्रवर्ग्यः। उपसद्। अग्निप्रणयनम्। हविर्धानप्रणयनम्। अग्नीषोमप्रणयनम्। अग्नीषोमीय पशुः। ऐन्द्राग्न पशुः विच्छिन्नसन्धानार्थम्। आश्विनः पशुः दौर्भाग्यनिरासार्थम्। प्रहृताहुतयः। दण्डप्रदानम्। वनस्पतियागः। धूपः। प्रहृताहुतयः। दण्डप्रदानम्। अध्रिगुः। मनोता। प्रातरनुवाकः। अपोनप्त्रीया। उपांशुग्रहः। अन्तर्यामग्रहः। उपांशुसवन. ग्रावा। बहिष्पवमानम्। सवनीयः पशुः। अग्निमन्थनम्। प्रहृताहुतयः। दण्डप्रदानम्। पर्यग्निकरणम्। उपस्थानानि। उपवेशनम्। सवनीयपुरोडाशाः। द्विदेवत्यप्रचारः। उन्नीयमानानुवचनम्। प्रस्थितयाज्याः। द्विदेवत्यग्रहभक्ष। ऋतुयाजाः। आज्यशस्त्रम्। होतृजपः–शस्त्र–शस्त्रजपः–याज्या–भक्ष. इद प्रतिदिनं भवति। प्रउग शस्त्रम्। मैत्रावरुणशस्त्रम्। ब्राह्मणाच्छंसिशस्त्रम्। इति प्रातःसवनम्। ग्रावस्तोत्रम्। माध्यंदिनपवमानः। दधिघर्मः। सवनीयपुरोडाशाः। पशुपुरोडाशः। उन्नीयमानानुवचनम्। प्रस्थितयाज्याः। दक्षिणाः। मरुत्वतीयग्रहप्रचार। मरुत्वतीयशस्त्र होतुः। निष्केवल्यं शस्त्रं मैत्रावरुणस्य। (मैत्रावरुणशस्त्रम्)। ब्राह्मणाच्छंसिशस्त्रम्। अच्छावाकशस्त्रम्। इतिमाध्यंदिनं सवनम्। आदित्यग्रहः। आर्भवः पवमानः। विप्रुड्ढोमः। हविर्यागः। वनस्पतियागः। स्विष्टकृत्। इडा। सवनीयपुरोडाशाः। स्विष्टकृत्। उन्नीयमानानुवचनम्। प्रस्थितयाज्याः। इडोपाह्वानम्। सावित्रग्रहप्रचारः। वैश्वदेव शस्त्रम्। घृतयागः सोमयागः घृतयागः। पात्नीवतग्रहः। आग्निमारुत शस्त्रम्। पाशुकं कर्म। हारियोजनः। इति तृतीयसवनम्। निष्क्रमणम्। समाहुतयः। दधिद्रप्सभक्षणम्। सख्यविसर्जनम्। प्रायश्चित्तानि। अवभृथः। उदयनीया। मैत्रावरुणी आमिक्षा। देविकाहवींषि। उदवसानीया। इति।

अग्निष्टोमः आज्यशस्त्रप्रभृतिः आग्निमारुतान्तः। कौब्रा १६।१.

अग्निष्टोमगत आग्निमारुतशस्त्र पृष्ठ्यषडहगतप्रथमाहस्य आग्निमारुतशस्त्र च एकमेव। २०।२।१५.

अग्निष्टोमनिष्पादकाः स्तोमाश्चत्वारः त्रिवृत्, पञ्चदशः सप्तदशः, एकविंशश्चेति। ऐआ १।८।७ सायणः।

अग्निष्टोमप्रशंसा। १४।१–६.

अग्निष्टोमस्य नवतिशतं (१९०) स्तोत्रीया ऋचः। प्रातःसवने बहिष्पवमाने त्रिवृत् स्तोमः, आज्यशस्त्राणि चत्वारि पञ्चदशस्तोमकानि इति (६९) स्तोत्रीयाः। माध्यंदिने पवमानं पञ्चदशं, पृष्ठस्तोत्राणि चत्वारि सप्तदशस्तोमकानि इति (८३)। तृतीयसवने आर्भवः पवमानः सप्तदशस्तोमकः, यज्ञायज्ञीयं च एकविंशं इति (३८) मिलित्वा (१९०)। १४।१।४ सायणः।

अग्निष्टोमस्य यथा प्रायणीया तथा उदयनीया, विशेषस्तु अस्ति। १४।५।४–८

अग्निष्टोमस्य स्तोत्राणि द्वादश, शस्त्राणि च द्वादश। १४।१।६, १६।४।६.

अग्निष्टोमे अहीने च मैत्रावरुण ब्राह्मणाच्छंसि- अच्छावाकानां परिधानीयाः। 'परिधानीया' शब्दे द्र०। २०।४।५.

अग्निष्टोमे ऋतुग्रहप्रचारे ऋतुयाजार्थं मैत्रावरुणः होतादीन् प्रेष्यति। २४।४।१ सायणः।

अग्निष्टोमे ऋतुयाजेषु प्रैषवषट्कारौ भवत, परतु प्रैषमन्त्र पठित्वा होतर्यज इति प्रैषो मैत्रावरुणस्य भवति। होत्रादयोऽपि प्रैषरूपामेव याज्या पठित्वा वषट्कार कुर्वन्ति। प्रैषानन्तर अग्न ऋक् न भवति। २२।४।२ सायण:।

अग्निष्टोमे तृतीयसवने होत्राकाणा शस्त्राणि न सन्ति अतिरात्रे तु सन्ति। ३०।५।१.

अग्निष्टोमे दक्षिणासु नीतासु ता अनु सुब्रह्मण्या सतिष्ठते। २६।३।१२.

अग्निष्टोमे निष्केवल्यशस्त्रान्ते उक्थ वाचीन्द्रायोपशृण्वते त्वा इति जप:। तत्र उक्थ वाचीन्द्राय इति भाग. उक्थसपत् नाम। उपशृण्वते त्वा इति भागस्तु उक्थवीर्यं नाम। ५।१२।३–४.

अग्निष्टोमे प्रात.सवने अच्छावाकस्य शस्त्र इन्द्राग्नी आगत० इति। ऐआ ५।१।५ सायण.।

अग्निष्टोमे प्रात.सवने आज्य शस्त्रं होतु', प्रउग होतु:, मैत्रावरुणशस्त्रं ब्राह्मणाच्छंसिशस्त्र अच्छावाकशस्त्र चेति पञ्च। तत्रैक प्रउग इतराणि चत्वारि आज्यानि इत्युच्यन्ते। माध्यंदिने सवने मरुत्वतीय होतु, निष्केवल्य मैत्रावरुणस्य, मैत्रावरुणशस्त्र, ब्राह्मणाच्छसिशस्त्र, अच्छावाकशस्त्र चेति पञ्च। तृतीयसवने वैश्वदेव होतु:, आग्निमारुत होतु: इति द्वे। मिलित्वा द्वादश शस्त्राणि। प्रयोग.।

अग्निष्टोमे प्रात सवने मैत्रावरुणस्य शस्त्र आनो मित्रावरुणा०। ब्राह्मणाच्छंसिन आ याहि सुषुमा हिते० इति। अच्छावाकस्य इन्द्राग्नी आगत० इति। ऐआ। ५।१।५ सायण:।

अग्निष्टोमे माध्यदिने मरुत्वतीय होतु शस्त्र आ त्वा रथ इत्यादिक तदन्ते च जनिष्ठा उग्र: सहसे तुराय इति सूक्तम्। ऐआ ५।१।८ सायण।

अग्निष्टोमे शस्त्राणि द्वादश। तेषु आज्य प्रथम, तत्राग्निर्देवता। आग्निमारुत अन्तिम तत्र विष्णुराम्नात. इति अग्नि अवम, विष्णु, परम इत्युक्तम्। ऐआ उपक्रमे सायण:।

अग्निष्टोमे सवनानि असत्वरमाणाश्चरेयु:। १४।६।१.

अग्निष्टोमे होता उत्तमे शस्त्रे परिधानीयाया उत्तमे वचने अन्तिम चतुरक्षर द्विरस्तथा प्रणुयात् ' यज्जरित्रे यज्जरित्रोऽऽऽऽम् इति। अतिरात्रे तु धेहि चित्र धेहि चित्रोऽऽऽऽम् इति। २८।७।१३.

अग्निष्टोमे होत्रादय' ऋतुग्रहप्रचारे मैत्रावरुणेन प्रैषयुक्तगतेन प्रेषिते सति याज्यया वषट्कुर्वन्ति। अध्वर्युयजमानौ तु प्रेषितौ स्वस्वयाज्या ' होतुरेतद्यज ' इति होत्रे प्रयच्छत', स्वय वा पठत:। २।२।४२ सायण.।

अग्निसंसर्गे प्रायश्चित्त। गार्हपत्याहवनीययो: ३५।५।२, अग्निना नयाणा ३, अन्यैरग्निभि' ४, दिव्येनाग्निना ३२।६। २, शवाग्निना ३, आरण्येनाग्निना ४। तत्तत शब्दे द्र०।

अग्निहोत्रमधिश्रित अमेध्यमापद्येत तदा सर्वं अग्निहोत्रहवण्या पर्यासिच्य प्राङुदेत्य नित्या समिधमाधाय उत्तरत उष्ण भस्म निरूह्य मनसा अग्निहोत्रमन्त्रमनुद्रुत्य प्रजापते न त्वत् इति ऋचा वा ( न मनसा नोपांशु ) जुहुयात्। उन्नयनकाले एकस्मिन् द्वयोर्वा उन्नीतयो: सतो. अमेध्यपाते अदुष्ट द्रव्यान्तर अधिश्रयणादिना सस्कृत्य जुहुयात्। ३२।४।१.

अग्निहोत्र अधिश्रित स्कन्दति वा विष्यन्दते वा तदा अद्भिरुपनिनयेत्। दक्षिणेन पाणिना अभिमृश्य- जपेत् दिव तृतीय यज्ञोऽगात् ० ययोरोजसा स्कभिता रजासि ० ( सौत्र ) इति मन्त्रद्वयम्। ३२।४।२ ५.

अग्निहोत्र अस्तमिते साय जुहोति, उदिते प्रात। २५।४।१८

अग्निहोत्र ( हवि. ) आहवनीय प्रति नयनकाले स्खलेत् भ्रश्येत वा तत्रैवोपविश्य तत्रैवानीताया' स्थाल्या: सकाशात् पुनरुन्नीय जुहुयात्। ३२।४।६.

अग्निहोत्र वैश्वदेव षोडशकल = रौद्रं गवि सत् ( पय यदा गवि भवति तदा तत् रुद्रदेवताक इत्यर्थ एव उत्तरत्र ), वायव्य उपावसृष्ट ( वासरू पिऊ लागल्यावर ), आश्विन दुह्यमान, सौम्य दुग्ध, वारुण अधिश्रित ( तापत ठेवलें असता ), पौष्ण समुदन्त ( वर येऊ लागता ), मारुतं विष्यन्दमान ( उतूं जाऊं

लागता ), वैश्वदेव निन्दुमत्, मैत्र शरोगृहीत ( साय आली असता ), द्यावापृथिवीयमुद्वासित ( स्थाली उतरल्यावर ), सावित्र प्रक्रान्त ( होमाकरिता नेण्याच्या आरंभी ), वैष्णव ह्रियमाण, बार्हस्पत्य उपसन्न ( आहवनीया जवळ ठेवलेलें ), अग्नि पूर्वाहुति, प्रजापतेरुत्तरा । ऐन्द्र हुत, इति षाडशकलत्वम् । २५ । १ ।५-८.

अग्निहोत्र साय प्रातश्च स्वाहाकारेण जुहति । १४ । २ । ३.

अग्निहोत्रदोहकाले अग्निहोत्री ( धेनु. ) वत्सेनोपसृष्टा यदि उपविशेत् तदा यस्माद् भीषा निषीदसि० इत्यभिमन्त्र्य उदस्थाद्देव्यदिति० इत्युत्थापयेत् । उदपात्र अस्या मुखे ऊधनि च उपगृह्णीयात् । एना ब्राह्मणाय दद्यात् । २५ । २ । १-५ । यदि वाश्येत ( हबरल्यास ) अन्न आदयेत् सूयवसाद् भगवती० इति । ६ यदि स्पन्देत स्पन्देनेन च पय स्कन्देत् तदा स्कन्न अभिमृश्य जपेत् यदद्य दुग्ध पृथिवी० इति । ७-८ । परिशिष्टेन जुहुयात् यदि अल होमाय स्यात् ९ । सर्वस्मिन् स्कन्ने अन्या दुग्ध्वा जुहुयात् । अन्याऽभावे दधियवागवादिना जुहुयात् । १०-११ । सर्वथा अक्षमत्वे तु 'अह श्रद्धा जुहोमि' इति सकल्परूप श्रद्धाहोम एव कर्तव्य ।

अग्निहोत्रस्य प्रशसा । २५ । ३

अग्निहोत्रस्य सायमाहुतय प्रातराहुतयश्च मिलित्वा ( ७२० ) भवन्ति । ता मज्जन्मत्त इष्टका एवेति ध्यातव्यम् । २५ । ३ । ११-१२.

अग्निहोत्रादि अपत्नीकस्यापि भवति । तदेषाऽभि यज्ञगाथा गीयते । यनेत् सौत्रामण्यामपत्नीकोऽप्यसोमप । मातापितृभ्यामऋणार्थात् यजेति वचनाच्छ्रुति ( श्रुते ) इति । ३२।८ । ९-१६. । तस्मादपत्नीकस्य आधान कुर्वन्ति । ३२ । १० । १ । अपत्नीक अग्निहोत्र जुहोति । ३२ । १० । १ ४.

अग्निहोत्रीधेनुविषये प्रायश्चित्तानि । ३२।२। ' अग्नि होत्रकाले ' इत्यत्र यदुक्त तदेवात्र प्रायश्चित्त प्राधान्ये नोक्तम् ।

अग्निहोत्रे अधिश्रिते यजमानमरणे ' अधिश्रिते ' इति शब्देद्र० । ३२।१।२.

अग्निहोत्रे उदितहोम सिद्धान्त । अनुदितहोमस्तु कौषीतकिना, स तु अत्र निन्दित । २५।४।-६.

अग्निहोत्रे ' उद्धराहवनीय ' इति यजमान अध्वर्यु प्रेष्यति । साय अस्तमयात् प्राक् प्रातश्च उदयात् प्राक् २५।१।१ ४

अग्निहोत्रे मन्त्रौ ' भूर्भुव स्वरोऽऽऽ मग्निर्ज्योतिर्ज्योतिरग्नि स्वाहा ' इति साय जुहोति । ' भूर्भुव स्वरोंऽऽऽसूर्योज्योतिर्ज्योति सूर्य स्वाहा ' इति प्रात । २५।६।४

अग्नीना त्रयाणामपि उपशान्तौ अग्नये तपस्वते जनद्वते पावकवते अष्टाकपाल निर्वपेत् । आ याहि तपसा-जने० आ नो याहि तपसा जने० इति याज्यानुवाक्ये । आहुतिं वा आहवनीये जुहुयात् अग्नये तपस्वते जनद्वते पावकवते स्वाहा इति । ३२।७।४.

अग्नाना त्रयाणामपि मिथ ससर्गे प्रायश्चित्त । अग्नये विविचयेऽष्टाकपाल निर्वपेत् । स्वर्णवस्तास्यग्रामरोचि० त्वमग्ने मानुषीरीळते विश ० इतियाज्यानुवाक्ये । आहुतिं या आहवनीये जुहुयात् अग्नये विविचये स्वाहा इति । ३२।५।१

अग्नीना द्विव्येनाग्निना ससर्गे(एकस्यापि),अग्नयेऽप्सुमते अष्टाकपाल निर्वपेत् । अप्स्वग्ने सधिष्टव० मयोदधे मेधिर पूतदक्ष० इति याज्यानुवाक्ये । आहुतिं वा आहवनीये जुहुयात् अग्नयेऽप्सुमते स्वाहा इति । ३२।६।२.

अग्नीना शवाग्निना ससर्गे प्रायश्चित्त अग्नये शुचयेऽष्टाकपाल निर्वपेत् । अग्नि शुचिव्रततम ० उदग्ने शुचयस्तव० इति याज्यानुवाक्ये । आहुतिं या आहवनीये जुहुयात् अग्नये शुचये स्वाहा इति । ३२।६।३

अग्नीषोमप्रणयनीया ऋच । अग्नीषोमाभ्या प्रणीयमानाभ्यामनुब्रूहि इति प्रैष । ५।४।१. सावीर्हि देव प्रथमाय० इति सावित्री प्रथमा । २ ३, प्रैतु ब्रह्मणस्पति० इति ब्राह्मणस्पत्या द्वितीया । ४ ६, होता देवो अमर्त्य ० इतितृच आग्नेय गायत्रमन्वाह सोमे राजनि प्रणीयमाने । ७ ९,उपत्वाग्ने दिवेदिवे इति तिस्र.,

उपप्रियं पनिप्नत इत्येका। १०-११, अग्ने जुषस्व इति आग्नीध्रे आहुत्या हूयमानायामन्वाह।१२-१३,सोमो जिगाति इति तृच सौम्य गायत्रमन्वाह तत्र सोमः सधस्थमासदत् इत्यन्तिमः पादः आग्नीध्रस्थानमतिक्रम्य पृष्ठतः कृत्वा अनुब्रूयात्। १४-१५, तमस्य राजा इति वैष्णवी। १६-१९, अन्तश्च प्रागा इति सोमे हविर्धान प्रपद्यमाने। अन्वाह। २०, श्येनो न योनिं इति सोमे हविर्धानसमीपवर्तिनि सति अन्वाह। २१-२४, अस्तम्नाद् द्या इति परिधानीया। २५-२६, एवा वन्दस्व वरुण इति परिधानीया बान्धवजीवनकामस्य अभयकामस्य च। २७-२८, तिः प्रथमा त्रिरुत्तमा। २९-३१.

अग्नीषोमीयः पशुः। तत्र आलम्भविधिः। ६।३।९, पशोः स्वरूप। १०, शेषभक्षण। ११-१२, आप्रियः (प्रयाजाः)। ६।१।१-१५, यथार्षि आप्रियः। १६,पर्यग्निकरण। ६।५।१-५,७।१।१-२, अध्रिगुः। ६।५।६।९, ६।६।१-१६, ६।७।१-११, जपः। ६।७।१२-१३, पशुपुरोडाश. व्रीहिमयो यवमयो वा। ६।८।१।८, ६।९-१-४, ७।१।१०-१३, वपायाज्या ६।९।५-६, पशुपुरोडाशयाज्या। ६।९।७ ८, पशुपुरोडाशयाज्या। ६। ९। ९-१०, पशुपुरोडाशस्य इडोपाह्वान, ११, मनोतासूक्ते प्रैषः। ६। १०। १, मनोतासूक्त। २-४, पशुप्रधानयाज्या। ५-७, वनस्पतियाग. । ८-९ पशुस्विष्टकृत्। १०, पशिवडा। ११, पर्यग्निकरण। ७। १। १-२, शामित्रे पशोर्नयन। ३, उल्मुक पुरस्ताद्धरन्ति। ४-५,६। ६।-८-१०, बर्हिःप्रक्षेप पशोर्हननस्थाने। ७।१।६-७, अवटः पुरीषस्थापनार्थः। ८-९, स्तोकानुवचनीयाप्रैषः। ७।२।१-२, स्तोकानुवचनीयाः। ३-१८, वपाहोमः। ७।३।१-७. अङ्गहोमः तृतीयसवने श्रपयित्वा। ८-९. अन्याहुति-आज्याहुति सोमाहुतिप्रशंसा। ७। ४। २, वपा पश्चावत्तैव। ७।४।३-७, पञ्चावत्तत्व च आज्यस्योपस्तृणाति हिरण्यशल्कः वपा हिरण्यशल्कः आज्यस्योपरिष्टादभिधारयति इति। हिरण्याभावे आज्यम्। (यातील प्रत्येक विषयाचें विवरण त्या त्या शब्दावर पहावें.)

अग्नीषोमीयः पशुः सप्तदशे अहनि १५।१।५.

अग्नीषोमीयः पशुः पत्नीसंयाजान्तः। १५।१।५.

अग्नीषोमीय पशौ यावत्या वाचा कामयीत तावत्या अनुब्रूयात। १५।१।७.

अग्नेः चित्याग्नेः उपस्थान महाव्रते माध्यंदिने होता। ५।२।२-६.

अग्नेः धिष्ण्येषु विहरणं आग्नीध्रात्। १०।२।२.

अग्नेः मथितस्य अग्नौ प्रहरणं आहवनीये। ३।५। २०-२३, ४०-४१.

अग्नेरायुः नाम मन्त्रकाण्डं, ऐतशप्रलापः नाम अयातयामं नाम। ३०।७।२.

अग्नेर्वै आदित्यो जायते। ४०।५।१३.

अग्नौ अग्नेरुद्धरणे प्रायश्चित्तं। 'उद्धरणे' इत्यत्र द्र। ३२।५।१.

अग्न्याहुतिः प्रशस्ता मन्थने कृते। ७।४।१.

अङ्गहोमः अग्नीषोमीयपशोः श्रपयित्वा तृतीयसवने। ७।३।८-९.

अङ्गिरसामयनं नाम सत्र अतिरात्रौ आद्यन्तौ, चतुर्विंश उक्थ्यो द्वितीयमहः, शेष सर्वे पृष्ठ्या. षडहाः। १८।३।५ ८.

अच्छावाकः ऋत्विक् उक्थ्ये तृतीयसवने ऐन्द्रावैष्णव शंसति, ऋतुर्जनित्री० इति। तस्य स्तोत्रियानुरूपौ ऐन्द्री अवाहीन्द्र गिर्वणः, इयं त इन्द्र गिर्वणः इति। २८।६। १०.

अच्छावाक' यो ब्राह्मणो बह्वृचो वीर्यवान् स्यात् सोऽच्छावाकीया कुर्यात्। १०।४।६.

अच्छावाकशस्त्र अग्निष्टोमे प्रात सवने ऐन्द्राग्न चतुर्थमाज्य इन्द्राग्नी आगतं सुत इति, प्रतिपत् तृचः इन्द्राग्नी आगत सुत, अनुचरः तृचः इन्द्राग्नी अप, सूक्तं तोशा वृत्रहणा ( ऋग ३।१२।४-६ ) इहेन्द्राग्नी उप ( ऋग १।१-२१।६ ) इयं वामस्य ( ऋग ७।९४।१-९ ) अत्र नवमी परिधानीया। अच्छावाकशस्त्र अग्निष्टोमे मध्यंदिने पञ्चमम्। प्रतिपत् प्रगाथः स्तोत्रियः तरोभिर्वो विदद्वसु, अनुचरः प्रगाथः तरणिरित् सिषासति, प्रगाथ ऐन्द्रः उदिन्न्वस्य रिच्यते, सूक्त भूय इद् वावृधे ( १-५ ) इमामू

प्रभृति (१-१०) अष्टदशमी परिधानीया । शस्त्रयाज्या पिबा वर्धस्व । प्रयोगे ।

अच्छावाकशस्त्रं चतुर्विंशेऽहनि महाव्रते च प्रातः-सवने आसुते सिञ्चत श्रियम् । ऐब्रा ५।१।५.

अच्छावाकस्य अग्निष्टोमे प्रातःसवने परिधानीया गोमद्धिरण्यवत्, विकृतौ आहं सरस्वती वतोः । अग्निष्टोमे माध्यंदिने शुनं हुवेम । विकृतौ नूनं साते । अग्निष्टोमे विकृतौ च तृतीयसवने उभा जिग्यथुः । २७।४-५.

अच्छावाकस्य अहरहःशस्यं अभितष्टेव दीधया । अहीने माध्यंदिने स्वपातां परिष्टात् । २९।४।११–१२

अच्छावाकस्य अहरहःशस्ये सूक्ते प्रतिपत् उरु णो लोकमनु। २९।६।५.

अच्छावाकस्य अहर्गणेषु ऐन्द्राग्नशस्त्रे आरम्भणीया यत्सोम आसुते । २७।३।५.

अच्छावाकस्य अहीनसूक्त माध्यंदिने शासद् वह्नि-र्जनयन्तः । इदमेव चतुर्विंशे अभिजिति विषुवति विश्वजिति महाव्रते पराक्षिषु अहःसु अभ्यावर्तिषु च । २९।२।५,८.

अच्छावाकस्य अहीने परिधानीया उभा जिग्यथुः । २८।७।६। उक्थ्ये तु अन्त्यचतुरक्षराभ्यासः पैरयेथामेर-येथा इति । २८।७।१२.

अच्छावाकस्य अहीने प्रातःसवने परिधानीया आहं सरस्वतीवतोः इति । सा मुक्तिर्नाम । माध्यंदिने नून साते। सा विमुक्तिर्नाम । २९।६।८–१०, २९।७।३.

अच्छावाकस्य अहीने प्रातःसवने प्रस्थितयाज्या प्रातर्या-वभिरागत । २८।२।६। माध्यंदिने इन्द्राय सोमाः प्रदिवो । २८।३।१२ । तृतीयसवने इन्द्राविष्णू पिबतम्। २८।४।११.

अच्छावाकस्य अहीने माध्यंदिने द्वे सूक्ते शंसनीये भूय इत्० इमामूषु । २८।५।६.

अच्छावाकस्य उक्थ्ये तृतीयसवने आरम्भणीयं सूक्तं जागतं ऋतुर्जनित्री । अन्ते त्रैष्टुभं अष्टर्चं ऐन्द्रावैष्णवं सं वां कर्मणा । १५।५।१, २८।७।२–४.

अच्छावाकस्य चतुर्थेऽहनि आवापिकस्तृचः प्रवोमहे इति विराट्छन्दस्कः । किंवा यो वाचा विवाचो मृध्रवाचः इति वैमदस्तृचः । पञ्चमेऽहनि समिन्द्र गर्दभं मृण इत्यादिस्तृचः पाङ्क्तः । षष्ठेऽहनि आदित्ये अस्य वीर्यस्य चर्किरन् इति पारुच्छेपः आत्यष्टः तृचः । २९।३।८-९

अच्छावाकस्य तृतीयसवने शिल्पेषु अन्ते ऋतुर्जनित्री इत्यादयः नाराशंसमिश्रा ऋचः शंसनीयाः । २८।८। १–३

अच्छावाकस्य दक्षिणः अंसः पशुभागः । ३१।१।२.

अच्छावाकस्य षष्ठेऽहनि प्रवोमहे एवयामरुतं जागतं अतिजागतं वा सूक्तं मारुतं शंसनीय तत्र न्यूङ्खः । ३०।४।१-४.

अच्छावाकस्य षष्ठेऽहनि माध्यंदिने यौनेय इन्द्र इति विष्णुलिङ्गोपेत मारुतं एवयामरुतं सूक्तं शंसनी-यम् । ३०।४।१४-१५.

अच्छावाकस्य षष्ठेऽहनि धिष्ण्यशस्त्रे नामाकस्तृचः ता हि मध्यंभराणाम् । २९।८।१-३.

अच्छावाकस्य सदःप्रवेशे विशेषः । पुरस्तादन्ये होत्रकाः सदः प्रसर्पन्ति *पश्चाऽच्छावाकः* । १०।४।५.

अच्छावाकस्य स्तोमविवृद्धौ आवापिकं सूक्तं आया-ह्यर्वाङुप । २९।३।१०–११.

अजःमेध्यः प्रयुक्ततमः । ६।८।३.

अञ्जःसवः=अञ्जसा इष्टिपशुसोमकर्ममन्तरेण ऋजु-मार्गेण, सवः सोमाभिषवः यस्मिन् यागे सः। यत्र ग्रावा इति नवर्चं सूक्तं, तत्र पञ्चमादिभिश्चतसृभिः अभिषवः, नवम्या द्रोणकलशे प्रक्षेपः, आद्याभिश्चतसृभिर्होमः । अनन्तरमेवावभृथः त्वं नो अग्ने इति द्वाभ्याम् । प्रत्येत शुनाश्चित् इत्यृचा आहवनीयस्योपस्थानं इति। सोयं अञ्ज-सवः। ३३।५।१.

अञ्जनं नेत्रयोः दीक्षितसंस्कारः । १।३।६-७.

अञ्जनं यूपस्य । प्रैषः अञ्जमो यूपमनुब्रूहि इति। ६।२।१, अञ्जन्ति त्वामध्वरे इत्यादयः सप्त ऋचः अञ्जनानुव-चनीयाः । तत्र अञ्जने प्रथमा, उच्छ्रयणे द्वितीया, युवा सुवासा इति सप्तमी परिव्ययणे सा च परिधानीया । त्रिः प्रथमा त्रिरुत्तमा । ६।२।१-१३.

अञ्जने महावीरस्य अनुवचनीया। अञ्जन्ति यं प्रथयन्तो ४।२।६.

अतिक्रमः उपसत्सु। सकृदतिक्रम्य आश्रावयति। ४।१।२.

अतिच्छन्दसं जगती असृजत। १९।६।६.

अतिच्छन्दाः छन्दः पृष्ठ्ये षडहे षष्ठेऽहनि। २२।७।१.

अतिथिः यद्यपि दरिद्रः याचनार्थं चरति तथापि सन्मार्गवर्ती श्रेष्ठश्च भवति। न वा अतन्द्रमातिथ्यायाद्रियन्ते। ऐआ १।१।९.

अतिमर्शो विहरणं, अतिलङ्घ्य मृश्यमानत्वात् अतिमर्शः। वालखिल्येषु प्रथमसूक्तस्य प्रथमाया ऋचः प्रथमपादस्य द्वितीयसूक्तगताद्वितीयस्या ऋचः द्वितीयेन पादेन संयोजनम्। एवं २।२।१ + १।१।२, १।१।३ + २।२।४, २।२।३ + १।१।४ इति। एवमेवोत्तरत्र। ३०।२।६ सायणः।

अतिमर्शप्रशंसा वालखिल्यासु। ३०।२। ७–८.

अतिरात्रः गवामयने प्रथममहः। १७।६।१ सायणः। अन्तिमं च। १७।८।२–८.

अतिरात्रः। १६।५–६। तत्र आश्विनं शस्त्रं। १७।१–५। रात्रिपर्याये प्रथमं होतुः शस्त्रं पान्त मा वो अन्धसः। १६।६।१–२, पर्यायत्रये होतुः शस्त्रयाज्या। प्रथमे अध्वर्यवो भरतेन्द्राय सोमं, द्वितीये अपाय्यस्यान्धसो। तृतीये तिष्ठा हरी। १६।६।३। प्रथमपर्याये शस्त्रे प्रथमपादाः द्विरभ्यसनीयाः, स्तोत्रे इव। ४, मध्यमे पर्याये मध्यमाः पादाः स्तोत्रे शस्त्रे च द्विरभ्यसनीयाः। ५, तृतीये पर्याये उत्तमाः पादाः स्तोत्रे शस्त्रे च द्विरभ्यसनीयाः। ६–७। इन्द्राय मद्वने सुतं, इदं वसो सुतमन्धः, इदं ह्यन्वोजसा सुतं इति ऋग्भिः स्तुवन्ति च शंसन्ति च। ८–९। द्वादश रात्रिपर्यायाः सर्वे पञ्चदशाः। गणचतुष्टयेन एकैकः पर्यायः। पर्यायाः साक्षात् त्रय एव गणास्तु द्वादश भवन्ति। तत्र होतृचमसमुख्यः प्रथमो गणः, मैत्रावरुणचमसमुख्यः द्वितीयो गणः, ब्राह्मणाच्छंसिचमसमुख्यः तृतीयो गणः, अच्छावाकचमसमुख्यः चतुर्थो गणः। तत्र प्रथमौ द्वौ पर्यायौ अध्वर्युश्चरति, अन्तिमौ द्वौ प्रतिप्रस्थाता। षोडशिस्तोत्रे एकविंशं साम अन्ते संधिस्तोत्रं त्रिवृत्स्तोमकम्। एवं च अतिरात्रे एकोनत्रिंशत् स्तोत्राणि भवन्ति। १४।३।२ सायणः। ब्रह्मा 'भूर्भुवः स्वरिन्द्रवन्तः स्तुध्वं' इति स्तोत्रप्रसवमाह। २५।९।५–६। होता उत्तमे शस्त्रे परिधानीयाया उत्तमे वचने चतुरक्षरं द्विरुक्त्वा प्रणुयात् धेहि चित्रं धेहि चित्रोऽऽऽम् इति। २८।७।१३.

अतिरात्रे एकाहे तृतीयसवने होत्रकाणां शस्त्राणि सन्ति अग्निष्टोमे तु न सन्ति। ३०।५।१.

अतिवादः। ब्राह्मणाच्छंसिशस्त्रे षष्ठेऽहनि यीमे देवा अक्रंसत इति अनुष्टुप् अर्धर्चशः। शाखान्तरीया इयम्। ३०।७।२०.

अतिशंसनं स्तोमविवृद्धौ प्रातःसवने माध्यंदिने सवने च एकया द्वाभ्या वा ऋग्भ्यां अतिशंसेत्, अपरिमिताभिस्तृतीयसवने। २९।७।१०–११। तत्र प्रातःसवने एकया द्वाभ्या वा इति नियमः, माध्यंदिने एकया द्वाभ्या अपरिमिताभिर्वा इति विकल्पः, तृतीयसवने तु अपरिमिताभिरेव। २७।५।७–८.

अतिशसनार्थे स्तोमविवृद्धौ, चतुर्विंशादिस्तोमैर्युक्तेषु अहःसु स्तोमसंख्यामतिक्रम्य ऋचां शंसनं अतिशंसनं नाम। तस्मिन् कर्तव्ये मैत्रावरुणः को अद्य नर्यो इति सूक्तमावपेत्। ब्राह्मणाच्छंसी वनेन वायो इति सूक्तं, अच्छावाकः आयाह्यर्वाङुप वन्धुरेष्ठाः इति। २९।३।१०–२०.

अत्यये (अतिक्रमे) अमावास्यायाः पौर्णमास्या वा प्रायश्चित्तं–अग्नये पथिकृते अष्टाकपालं पुरोडाशं निर्वपेत्। वेत्था हि वेधो अध्वनः० आदेवानामपि पन्था० इति याज्यानुवाक्ये। आहुतिं वा आहवनीये जुहुयात् अग्नये पथिकृते स्वाहा इति। ३२।७।३.

अत्रिः पञ्चममण्डलस्य ऋषिः प्राणत्वेनोपास्यः। ऐआ २।९।१–६, २।१०।१–५.

अद्रयः = ग्रावाणः सोमाभिषवार्थाः। ३५।६।४.

अधिकारी द्वादशाहस्य। भूयसीः दक्षिणाः ददत् अपापश्च ईदृशो यजमानः। 'ददत् याज्यः'। दक्षिणां प्रतिग्रहीत्रा ऋत्विजा याज्यम्। उभये राध्नुवन्ति,

विद्वांसो यजन्ते च याजयन्ति च । द्वादशाहे हि याजने प्रतिषेधो भवति, तत एवमुक्तम् । १९।३।१-२.

अधिश्रिते अग्निहोत्रे सान्नाय्ये हविःषु वा आहिताग्नेर्मरणे यजमानदहनदेशे एतानि उक्तानि हवींषि यजमानं परितः क्षिपेत् यथा सर्वाणि सदहेरन् । ३२।१।२.

अधिषवणं चर्म = यस्मिन् सोमः अभिषूयते । ३५।६।४.

अधिषवणफलके = द्वे उपरवेषु काष्ठफलके स्थाप्येते, तदुपरि चर्म, तदुपरि दृषद् (पाटा), तस्या सोमः अभिषूयते ग्रावाभिः (वरवंट्यानीं) । ३५।६।४.

अध्ययनविधिः बोधपर्यवसायी । पाठमात्रपर्यवसायी वा शाङ्करदर्शनानुसारात् । ऐ.ब्रा उपक्रमे सायण.।

अध्रिगुः । होतुः । प्रैषः अध्वर्योः मैत्रावरुण प्रति 'उपप्रेष्य होतर्हव्या देवेभ्यः' इति ।६।५।६। मैत्रावरुणस्य होतारं प्रति उपप्रैषः 'अजैदग्निरसनद्वाजं०' इति । ७-९ । अध्रिगुः दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्या दुर आशासना मेधपतिभ्यां मेध इत्यादिः । ६।६।१-१६, ६।७।१-११ । यदि एकदेवत्यः पशुः स्यात् 'मेधपतये मेध' इति ब्रूयात्, यदि द्विदेवत्यः 'मेधपतिभ्यां मेध' इति ब्रूयात्, यदि बहुदेवत्यः 'मेधपतिभ्यो मेध' इति ब्रूयात् ।६। ।६. 'अस्ना रक्षः संसृजतात्' इत्यत्र रक्षःपदं उपांशु वक्तव्यम् । ६ । ७ । ५.

अध्रिगो शमीध्वं सुशमि शमीध्वमध्रिगा ऽऽऽउ' इति त्रिर्ब्रूयात् 'अपाप' इति च । ६ । ७ । ११ । अध्रिगुपाठानन्तर जपः 'शमितारो यदत्र सुकृतं कृणवथास्मासु तत् यद्दुष्कृतमन्यत्र तत्' इति । ६ । ७ । १२-१३.

अध्रिगौ 'अस्ना रक्षः संसृजतात्' इत्यत्र रक्षःपदं नैवोच्चार्यं इति केचित् । उपांशु उच्चार्यमिति सिद्धान्तः। ६।७।१-९.

अध्वर्यवः महाव्रते निष्केवल्योपक्रमात् प्राक् अपाघाटलिकातुम्बवीणादीनां शब्दान् कारयन्ति । ऐ.आ ५।५।११.

अध्वर्युः ऐन्द्राग्न ग्रहं इन्द्राग्नी आगत सुतं इति मन्त्रेण गृह्णाति । तत होतुः आज्यं शस्त्रम् ।१०।५।१७.

अध्वर्युः मैत्रावरुणेन ऋतुयाज्यार्थं प्रेषितः 'होतरेतयज' इति स्वयाज्या होत्रे प्रयच्छति (प्रायः) अग्निष्टोमे । षडहे षष्ठेऽहनि ▮ स्वयमेव पठेत् । २२ । ४ । २ सायणः ।

अध्वर्युः वपा स्रुवेणाभिघारयन्नाह स्तोकेभ्योऽनुब्रूहि इति प्रैषम् । ७ । २ । १-२.

अध्वर्युः हिरण्यकशिपौ आसीनः प्रतिगृणाति राजसूये शौनःशेपाख्याने । शतं गवा प्रतिगरित्रे दद्यात् एतच्चैवासनम् । ओम् इति ऋचः प्रतिगरः । तथा इति गाथायाः । ३३ । ६ । १२-१३, १५.

अध्वर्युः होतारं प्रति उत्तरमाह 'उतेमनन्नमुः' इति एकधनासु वसतीवरीषु च होतृचमसे समवनीतासु । अग्निष्टोमे । ८ । २ । १२--१३.

अध्वर्युभिः प्रेङ्खः उपकल्पनीयः महाव्रते । ऐ.आ ५ । ४ । १ सायणः.

अध्वर्योः आज्यशस्त्रकालीने आहावे अतुष्पदत्व, पराञ्चं चतुष्पदासीन अभ्याह्वयते होता ।१०।५।४। आहावोत्तरमध्वर्युः सम्यङ् द्विपाद् भवति । ५.

अध्वर्योः दक्षिणं पार्श्वं पशुभागः । ३१ । १ । २.

अध्वर्योः मैत्रावरुणं प्रति आध्रिगौ प्रैषः 'उपप्रेष्य होतर्हव्या देवेभ्यः इति । ६ । ५ । ६.

अध्वर्योः होतृशस्त्रजपोत्तर प्रातःसवने 'ओमुक्थशाः' इति चतुरक्षरो जपः । एव माध्यंदिने सवने । तृतीयसवने तु ॐ इत्येकाक्षर एव जपः । १२ । १ । २-४.

अनुचरः तृचः अच्छावाकश्स्त्रे ऐन्द्राग्नशस्त्रे अग्निष्टोमे प्रातःसवने इन्द्राग्नी अप०। प्रयोगः । निष्केवल्यशस्त्रे होतुः पृष्ठे चतुर्थेऽहनि पृष्ठ्ये षडहे श्रुधी हवं विपिपाना० । २१ । ४ । १९ । तत्रैव षष्ठेऽहनि रेवाँ इद्रेवत स्तोता० । २२।७। १४ । मार्ध्यंदिने अच्छावाकशस्त्रे अग्निष्टोमे प्रातःसवने आ नो याहि०। प्रयोग । मरुत्वतीये शस्त्रे पृष्ठ्ये षडहे प्रथमेऽहनि इदं वसो सुत० ।२०।१।९। तत्रैव द्वितीयेऽहनि इन्द्र इत् सोमपा०। २० । ३ । ६ । तत्रैव तृतीयेऽहनि अय इन्द्रस्य सोमाः । २१ । १ । १३ । तत्रैव चतुर्थेऽहनि इदं वसो सुतमन्ध । २१ । ४ । १२॥

तत्रैव पञ्चमेऽहनि इन्द्र इत् सोमपाः । २२ । १ । ९ । तत्रैव षष्ठेऽहनि त्रय इन्द्रस्य सोमाः । २२ । ७ । ७ । मरुत्वतीये शस्त्रे एव छन्दोमप्रथमेऽहनि 'इद वसो सुतमन्धः' । २३।१।१२। तत्रैव छन्दोमे द्वितीये इन्द्र इत् सोमपाः । २३ । ३ । १० । तत्रैव छन्दोमे तृतीये त्रय इन्द्रस्य सोमाः । २४।१।१ । अग्निष्टोमे प्रातःसवने मैत्रावरुणाख्ये आ नो गन्त रिशादसः । प्रयोग । तत्रैव-माध्यंदिने मैत्रावरुणपृष्ठे कया त्व न ऊत्या । प्रयोग । तत्रैव तृतीयसवने वैश्वदेवशस्त्रे अद्या नो देव सवितः । प्रयोग । पृष्ठ्ये षडहे वैश्वदेवशस्त्रे प्रथमेऽहनि अद्या नो देव सवितः। २०।२ । १, द्वितीयेऽहनि आ विश्वदेव ।२०।३। २ । तृतीयेऽहनि अद्या नो देव सवितः ।२१।२।६। चतुर्थेऽहनि आ-विश्वदेवं ।२१।५।६। पञ्चमेऽहनि अद्या नो देव सवितः २२। २ । ६ । षष्ठेऽहनि 'दोषो आगात्' । २२ । ८ । ८ । वैश्वदेवशस्त्रे एव छन्दोमे प्रथमे अद्या नो देव सवितः । २१ । २ । ६ । १२ । छन्दोमे द्वितीये आ विश्वदेव सत्पतिं । २३ । ४ । ८ । छन्दोमे तृतीये अद्या नो देव सवितः । २४ । २ । ९.

अनुचरः नवर्चः पृष्ठ्ये षडहे पञ्चमेऽहनि निष्केवल्यशस्त्रे स्वादोरित्था ( १–३ ) आ नो हरिभि. (१–३) इन्द्रं विश्वा अवीवृधन् (१–३)। २२।२।५.

अनुचरः प्रगाथः अग्निष्टोमे माध्यंदिने भञ्जाराक पृष्ठे 'तरणिरित् सिषासति', शाक्ताश्वछसिपृष्ठे 'तत्वा यामि सुवीर्यं', मरुत्वतीयशस्त्रे द्वोतुः पृष्ठे 'इद वसो सुत'। अग्निष्टोमे तृतीयसवने आग्निमारुते शस्त्रे 'देवो वो द्रविणोदाः'। पृष्ठ्ये षडहे निष्केवल्यशस्त्रे प्रथमेऽहनि 'अभि त्वा पूर्वं'। २२ । १ । १३ 'द्वितीयेऽहनि ' त्वं ह्येहि चेरवे'। २० । ३ । ११ । तृतीयेऽहनि यदिन्द्र यावतस्त्वं २१ । १ । १८ । निष्केवल्ये शस्त्रे छन्दोमे प्रथमे ' त्व ह्येहि चेरवे । २३ । १ । २० । २५ । छन्दोमे द्वितीये 'अभि त्वा पूर्वं' ।२३ ।३।२१। छन्दोमे तृतीये त्व ह्येहि चेरवे । २४ । १ ।२१.

अनुपानीयाः नाम ऐन्द्रीश्चतस्रः ऋचः स्वादुष्किलायं मधुमाँ उतायम् । अत्र मद्वान् प्रतिगरः 'मदामोदैव' इति । आग्निमारुते शस्त्रे पिन्वाम्य उत्तरम् । १३।१४।१–२.

अनुबन्धचतुष्टयं= इष्टप्राप्त्यानिष्टपरिहारयोः अलौकिक उपायो विषयः, तद्बोधः प्रयोजन, तद्बोधार्थी अधिकारी, उपकार्योपकारकभावः सबन्धः । ऐत्राउपक्रमे सायणः ।

अनुमतिः=- या पूर्वा पौर्णमासी साऽनुमतिः । ३२।९।२.

अनुमन्त्रणं वषट्कारस्य । मतभेदेन मन्त्रचतुष्टयम् 'वाक्' इत्येकः पक्षः । ' वषट्कार मा मा प्रमृक्षो माऽहं त्वा प्रमृक्षं बृहता मन उपह्वये व्यानेन शरीरं प्रतिष्ठासिप्रतिष्ठा गच्छ प्रतिष्ठा मा गमय' इति द्वितीयः पक्षः । ' ओजः सह ओजः ' इति तृतीयः पक्षः । ' वागोजः सह ओजो मयि प्राणापानौ ' इति चतुर्थः पक्षः सिद्धान्तः । ११।८।२–१०.

अनुयाजनिषेधः आतिथ्यायाम् । ३।६।१२–१५। उपसत्सु ४।९।१.

अनुयाजाः प्रायणीयाया न सन्ति प्रयाजाश्च उदयनीयाया न सन्ति इति एकः पक्षः, उभय उभयत्र वर्तते एव इति पक्ष. सिद्धान्तः । २।९।१–४

अनुरूपः = अहीने यः श्वःस्तोत्रियः तमद्य अनुरूप कुर्वन्ति । ( उद्या स्तोत्राचा जो प्रगादिरूप पहिला अवयव असेल, तो आज स्तोत्राचा दुसरा अवयव करावयाचा, त्याला अनुरूप म्हणतात. ) २७।२।१ ३,२९।१।१.

अनुरूप. प्रगाथः निष्केवल्ये स्तोत्रियात् उच्चैस्तरामिव शस्तव्यः । १२।१३।१–४.

अनुरूपः शस्त्रावयवो द्वितीयः । स च प्रगृह्यात्मको वा तृचो वा सूक्तमेव वा स्यात् । स एव अनुचर इत्युच्यते । स्तोत्रियानुरूपो एव प्रतिपदनुचरौ । औद्गात्रे स्तोत्रियानुरूपौ इत्युच्येते, हौत्रे पुनस्तावेव प्रतिपदनुचरौ उच्येते । १२।१२।७.

अनुराचनं प्रातरनुवाकस्य ऋकशः कर्तव्यं इत्येकः पक्षः, पच्छ. इति द्वितीयः, अर्धर्चशः इति तृतीयः सिद्धान्तः । ७।८।१ ४.

अनुवषट्कारः प्रउगे ' सोमस्याग्ने वीहि ' इति ।

११।५।२-६। प्रवर्ग्ये पूर्वाह्णे अपराह्णे च। ४।५।४-६। महाव्रते निष्केवल्यशस्त्रान्ते याज्यावषट्कारेणोपसंतनुयात् अनवानम्। ऐआ ५।१३।७.

अनुवषट्कारनिषेधः आदित्यग्रहे।१३।५।३। ऋतुयाजेषु।९।५।६-७। द्विदेवत्येषु।९।४।२-३। पात्नीवतग्रहे।२६।३।९। सावित्रग्रहे च।१३।५।४.

अनुवषट्कारेण सोमस्य घर्मस्य वाजिनस्य च स्विष्टकृतः सिद्धिः। तेषु पृथक् स्विष्टकृन्नास्ति। ४।५।६.

अनुवादरूपाणां 'द्विः संवत्सरस्य पच्यते' इत्यादीनामर्थवादाना न स्वार्थे प्रामाण्यम्। ऐआ उपक्रमे सायणः।

अनुव्याहाराः नाम केचिन्महर्षयः। परकीयदोषोक्तिमनु स्वस्य व्याहाराः शापरूपं वचनं येषा प्राणोपासकाना ते महर्षयः। शापवचनं यथा—१ प्राण यशं समधा प्राणं मा यशं सदधतं न कश्चोपि प्राणस्त्वा यशो हास्यति। २ प्राणं यशं समाधित्सिषन्त नाशकः संधातुं प्राणस्त्वा यशो हास्यति, इति। ऐआ ३।४

अनुष्टुप्कारं संशनं नाम पादद्वये अष्टाक्षरे अवसाय चतुर्थपादे प्रणवः। ऐआ ५।१२।२ सायणः।

अनुष्टुप् छन्दः चतुर्थेऽहनि पृष्ठ्ये षडहे। २११।४।१-२.

अनुष्टुप्सहस्रं निष्केवल्ये महाव्रते इत्येके। ऐआ २।१७।३.

अनुष्टुभं गायत्री असृजत। १९।६।६.

अनूचानः मूकवदितः, शाखा इत्येके। ३१।१।२ सायणः।

अनूबन्ध्यायाःपुरोडाशं अनु निर्वाप्याणि देविकाहवींषि देवीना हवींषि च। १५।३-४.

अनूबन्ध्यायाः समिष्टयजुषामुपरिष्टात् 'पुनर्नो अग्निर्जातवेदा ददातु क्षत्रं पुनरिष्ट पूर्त दात् स्वाहा' इति मन्त्रेण होमः आहवनीये क्षत्रियस्य यजमानस्य। ३४।३।३.

अन्तरागमने अग्निषु प्रायश्चित्तं, अनो वा रथो वा श्वा वा यदि गच्छेत् नैतन्नाद्रि कुर्यात्। नैतन्नाद्रि कुर्वीत, गार्हपत्यात् आ आहवनीयं अविच्छिन्नां उदक धारां 'तन्तुं तन्वन् रजसो' इति मन्त्रेण सिञ्चन् अध्वर्युः मध्येन गच्छेत्। तच्च प्रायश्चित्तार्थमेवेति न दोषः। ३२।११।३,७.

अन्तर्यामग्रहं अनुमन्त्रयेत होता उपांशु 'अपानं यच्छ स्वाहा त्वा सुहव सूर्याय' इति अग्निहोमे। समभ्यपानेत् 'अपानापानं मे यच्छ' इति। वाग्विसर्गस्यैतत्प्रयोगः। ८।८।३.

अन्तर्यामग्रहहोमपर्यन्तं अपोनप्त्रीयोत्तरं होतुर्वाङ्नियमः। ८।३।१-२.

अन्धाहिः। तस्य स्तुतिः। ११।२।३.

अन्नं अशीतयः महाव्रते पक्षिरूपेण ध्यातस्य निष्केवल्यस्य। गायत्री तृचाशीतिः, बार्हती तृचाशीतिः औष्णिही च तृचाशीतिः या शस्यते, सा अन्नं इति ध्यानं कर्तव्यम्। ऐआ। १।१९।१-४.

अन्नं प्रभूतं दद्यात् यजमानः महाव्रते। ऐआ ५।५।१२.

अन्नाद्यकामस्य बैल्वो यूपः। ६।१।६-९.

अन्नाद्यकामस्य महाव्रते आज्यशस्त्रं 'अग्निं नरो दीधितिभिररण्योः' इति पञ्चविंशत्यृचम्। ऐआ १।२।१-१२.

अन्यैरग्निभिः स्वाग्नीनां संसर्गे प्रायश्चित्तं, अग्नये क्षामवते अष्टाकपाल निर्वपेत्। 'अक्रन्ददग्निः स्तनयन्निव द्यौः, अधा यथा नः पितरः परासः' इति याज्यानुवाक्ये। आहुतिं वा आहवनीये जुहुयात् अग्नये क्षामवते स्वाहेति। ३२।५।४.

अन्वाधानं दक्षिणाग्नेः कर्तव्यमेव।३२।११।४-६.

अन्वाधानकाले दक्षिणाग्नेराहरणं कर्तव्यमेव। ३२। ११।४-६.

अपहारे सायंदुग्धस्य सांनाय्यस्य, प्रातर्दुग्धं द्वैधं कृत्वा अन्यतरात् आतञ्च उभाभ्या यजेत। ३२।३।१। प्रातर्दुग्धस्य उभयस्यापि वा अपहारे तस्य स्थाने ऐन्द्रं माहेन्द्रं वा पुरोडाशं निर्वपेत्। ३२।३।२-३। कथागामेव हविषामपहारे सर्वत्र आज्यं परिकल्प्य तयैवाज्यहविषा इष्ट्वा यजेत। ततः पुनः श्रद्धया तयैवेष्ट्वा यजेत। ३२।३।४.

अपांशान्तिः नाम मन्त्रः। तस्य पाठनं यशादग

राजाभिषेके आसन्द्यामारोहणोत्तरं ' शिवेन मा चक्षुषा पश्यतापः०' इति।२७।२।९--११.

अपिशर्वराणि नाम अतिरात्रे रात्रिपर्यायेषु 'द्वादश स्तोत्राणि अपिशर्वराणि '। १६।६।११.

अपोनप्त्रीयं सूक्त-अग्निष्टोमे प्र देवत्रा ब्रह्मणे०इति। तत् संततमनुब्रूयात् । तस्य त्रिः प्रथमा संततमन्वाह तेनैव तत्सर्वं संततमनूक्तं भवति। ८।१।१--८ । तत्र प्रथमाः नव ऋचः अनूच्य हिनोता नो अध्वर इत्येकादशी दशमीत्वेन वक्तव्या । ८।२।१ -२। आवर्वृततीरधनु इति एकधनासु आयृतासु ।३। प्रति यदापो इति प्रतिदृश्यमानासु एकधनासु । ४ । आ धेनवः पयसा इति चात्वालसमीपमुपायतीषु । ५ । समन्या यन्त्युप इति समायतीषु ( होतृचमसंस्थवसतीवरीभिः सयोयाजितु समीप नीतासु ) । ६–८ । आपो न देवीरुपयन्ति इति होतृचमसे वसतीवरीषु एकधनासु च समवनीयमानासु । ९ । अथ होता अध्वर्युं पृच्छति ' अध्वर्यो ऽवेरपाऽऽऽ३ ' इति । १०--११ । अध्वर्युः प्रत्याह ' उतेमनन्नमुः ' इति। १२--१३ । होता प्रत्युत्तिष्ठति आह च ' तास्वध्वर्यो इन्द्राय सुनोतन ' ... तारिषोऽऽऽम् ( शौत्र ) । १४ -१५ । अनुप्रपद्यते च अम्बयो यन्त्यध्वभिः इत्यनुब्रुवन् ।१६- २१। तेजस्कामो ब्रह्मवर्चसकामस्तु अमूर्या उपसूर्ये इत्यनुब्रूयात्। २२।अपो देवीरुपह्वये इति पशुकामः।२३।एताः सर्वा अनुब्रुवन् अनुप्रपद्येत । २४--२५ । एमा अग्मन्नाप उशती इति साद्यमानासु वसतीवरीषु एकधनासु च । २६ । आग्मन्नाप उशती इति सन्नासु परिधानीया । २७.

अप्तोर्यामः अत्यतिरात्रः । अप्तोर्यामो नाम ज्योतिष्टोमस्यसंस्था शेष एव । तत्र अतिरात्रोत्तरं चत्वारि स्तोत्राणि अधिकानि इति तत्र त्रयस्त्रिंशत् स्तोत्राणि भवन्ति, तत्र अन्तिम स्तोत्र वैष्णवम्। १४।३।२ सायणः. ।

अप्रतिरथं नाम सूक्तं आशुः शिशानो इति। ३७।६।४.

अभिचारः वषट्कारेण । यं द्विष्यात् तं ध्यायेत् वषट्करिष्यन् ( वषट्कारात् प्राक् होता ) ११।६।१. अभिचारप्रयोग. निष्केवल्य याज्याया, अविराजा ( विराड्भिन्नछन्दस्कया ऋचा ) अस्य याजयेत् गायत्र्या वा त्रिष्टुभा वा अन्येन वा छन्दसा ।१२।११।१०.

अभिचारप्रयोगः प्रउगशस्त्रयाज्यान्तवषट्कारेण, यं द्विष्यात् तं ध्यायेद् वषट्करिष्यन् । ११।६।१.

अभिचारप्रयोगाः मरुत्वतीयशस्त्रे । यः कामयेत क्षत्रेण विशं हन्यामिति त्रिस्तर्हि निविदा सूक्तं विशंसेत् ( सूक्तस्य आदौ मध्ये अन्ते च निविद दध्यात् ) । यः कामयेत विशा क्षत्रं हन्यामिति त्रिस्तर्हि सूक्तेन निविद विशंसेत् ( निवित्पदाना आदौ मध्ये अन्ते च सूक्त शंसेत् ) । य उ कामयेत उभयत एन विश ( पित्रादिभ्यः पुत्रादिभ्यश्च, मातृपक्षे पितृपक्षे वा ) पर्यवच्छिनदानि इति, उभयत. (निविदामादावन्ते च) तर्हि व्याहयीत ( आहाव पठेत् ) १२।८।८ -१०.

अभिचारे निवित्सूक्तयोः शंसने विशेषः । य कामयेत क्षत्रेणैव व्यर्धयानि इति, मध्ये निविदः सूक्तं शंसेत् । य कामयेत विशा एन व्यर्धयानीति मध्ये सूक्तस्य निविदं शंसेत् । १०।१।२--३.

अभिजित् सर्वस्तोमः गवामयने विषुवतः प्राक्तने दशाहे व्युत्क्रमेण चतुर्थमहः । १८।५।२.

अभिजिति माध्यंदिने अहीनसूक्तानि शंसेत् । मैत्रावरुण आ सत्यो यातु मघवाँ ऋजीषी इति। ब्राह्मणाच्छंसी अस्मा इदु प्र तवसे इति। अच्छावाक शासद् वह्निर्जनयन्त वह्निं इति। २९।२।८.

अभिप्लवः षडहः गवामयने आदित्यानामयने च। १८।१.

अभिप्लवषडहे द्वौ त्र्यहौ । प्रथमे ज्योतिः गौः आयुः ( ज्योतिष्टोम. गोष्टोमः आयुष्टोमः ) । द्वितीये गौ आयुः ज्योति इति व्युत्क्रमः । अत्र षडहे प्रथम षष्ठ चाहः अग्निष्टोमौ ज्योतिष्टोमौ, मध्ये चत्वार उक्थ्याः । तथा च आद्यन्तौ ज्योतिष्टोमौ, मध्ये गोष्टोमौ उक्थ्यौ आयुष्टोमौ उक्थ्यौ इति चत्वारः । १८।१।- १–५.

अभिमन्त्रण अभिषेकोत्तर राज्ञः ऐन्द्रामहाभिषेके प्राच्या त्वा दिशि० इमा आपः शिवतमा इत्येतेन च तृचेन देवस्य त्वेति च यजुषा भूर्भुवः स्वरिति च व्याहृतिभि·

इत्येकः पर्यायः। दक्षिणस्या त्वा इत्यादिर्द्वितीयः। प्रतीच्यां त्वा इत्यादिस्तृतीयः। उदीच्या त्वा इत्यादिश्चतुर्थः। उर्ध्वाया त्वा इत्यादिः पञ्चमः। अस्या त्वा ध्रुवाया इत्यादिः षष्ठः। इति षड्भि. पर्यायैः। ३९।५।१२.

अभिमन्त्रण आसन्द्याः ऐन्द्रमहाभिषेके। बृहच्च ते रथंतरं च पूर्वौ पादौ इत्यादि। ३९।३।१–२.

अभिमन्त्रणं आसन्द्याः यज्ञाङ्गराजाभिषेके। तां पश्चादुपविश्य आच्य जानु दक्षिण, उभाभ्या पाणिभ्यामालभ्य अभिमन्त्रयते यजमानः अग्निष्ट्वा गायत्र्या इत्यादि।३७।२।२३.

अभिमन्त्रणं राज्ञः सुरापानोत्तर ऐन्द्रामहाभिषेके। अपाम सोमं०शं नो भव० इति। ३९।६।६.

अभिमर्शः पुरोहितेन राजदत्तस्य विष्टरस्य कर्तव्यः, या ओषधीः सोम राज्ञीर्बह्वीः शत० इति। ४०।४.

अभिवान्यवत्सा गौः नाम अभिवाः अभिमातः अन्यः वत्सः यस्याः सा गौः। स्ववत्सो मृतः, अन्यवत्सेन च स्रवति या, सा गौः।३२।१।४ सायणः।

अभिषिक्तः क्षत्रियः जयार्थिन शरणागतं राजानं, तस्य रथोपस्थं वनस्पते वीड्वङ्गो हि इति ऋचा अभिमृश्य ब्रूयात् आतिष्ठस्वेता ते दिशमभिमुख.० इतिमन्त्रम्। ततः अभीवर्तेन हविषा इति सूक्तेन एन दिक्षु आवर्तयेत्। ततः आशुः शिशानः इत्यप्रतिरथेन सूक्तेन, शास इत्था इति शासमूक्तेन, प्रधारयन्तु मधुनः इति सौपर्णसूक्तेन च एनमन्वीक्षेत। जयति ह ता सेनाम्। ३७।६।२-९.

अभिषिक्तः क्षत्रियः पुनः राष्ट्रप्राप्त्यार्थिनं पुरुषं शरणागतं अपराजिताया दिशि प्रवर्तयेत्, राष्ट्रमगच्छति। ३७।६।७.

अभिषिक्तः क्षत्रियः द्वंद्वयुद्धे जयार्थिनं पुरुष शरणागतं अपराजिताया दिशि प्रवर्तयेत्, जयति ह त संग्रामम्। ३७।६।६.

अभिषेकः। अभिमन्त्रणोत्तर ऐन्द्रमहाभिषेके राज्ञः आसन्द्यामासीनस्य, औदुम्बर्या आर्द्रया शाखया सरूपया जातरूपमयेन च पवित्रेण अन्तर्धाय इमा आपः शिवतमा इति तृचेन, देवस्य त्वेति च यजुषा, भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः। ३९।४।२.

अभिषेकः उदवसानीयोत्तर क्षत्रियस्य। यज्ञाङ्गोऽयम्। ३७।१–७। तत्र संभाराः। ३७।१।३। आसन्द्याः प्रतिष्ठापनम्। ४। आसन्द्या उपरि व्याघ्रचर्म। ३७।२।१। आसन्द्या अभिमन्त्रणम्। २–३। आसन्द्यामारोहणम्।४-८। अपांशान्तिवाचनम्।९–११। उदुम्बरशाखामन्तर्धायाभिषिञ्चति, अभिषेके मन्त्राः इमाः आपः शिवतमा इमाः० याभिरिन्द्रमभ्यषिञ्चत् प्रजापतिः० महान्त त्वा महीनां (इति तिस्रः ऋचः सौत्राः) देवस्य त्वा सवितुः प्रसवे—यशसेऽन्नाद्याय इति यजुः सौत्र, भूर्भुवःस्वः इति व्याहृतयः इति। ३७।३।१–९। होमः, ब्रह्म प्रपद्ये स्वाहा क्षत्रं प्रपद्ये स्वाहा इति आहुतिद्वयम्। १०। संभारप्रशंसा। ३७।४।१-७। सुराकंसं राजहस्ते आदधाति स्वादिष्ठया मदिष्ठया इति। ८–९। शान्तिवाचन नाना हि वा देवहित इति। १०–१२। सुराशेषदान पानोत्तर मित्राय। १३–१४। अवरोहः आसन्द्याः सकाशात्। ३७।५।१–४। अवरोहणप्रकारः। २। अवरोहोत्तरं उपस्थं कृत्वा आसनं ५। प्रत्यगे त्रिर्नमस्कारः। ५–६। वरदानं। ५, ७। वाग्विसर्गः। ५, ७। समिदाधानं। ८–१०। उत्क्रमण त्रीणि पदानि। ११–१२। दिगुपस्थानं। १३। शत्रूणां व्यस्नुचिवचनम्। ३७।६।८। गृहे आगमनम्। ८। आज्याहुतीः कंसेन चतुर्गृहीताः प्रपद जुहोति। ९। ३७।७।१–४। आशीर्मन्त्रपाठः। ५–६। अत्र विशेषः तत्तच्छब्दे द्र०।

अभिषेकप्रयोगः यज्ञाङ्गराजाभिषेकस्य। पुरस्तादेव संभारा उपक्लृप्ता भवन्ति। औदुम्बरी आसन्दी प्रादेशमात्रपादा अरत्निमात्रशीर्षण्यानूच्या मौञ्जविवाना व्याघ्रचर्मास्तरणा, औदुम्बरश्चमसः, उदुम्बरशाखा अष्टौ यर्षा अभिषेकार्थं, तस्मिंश्चमसे दधि मधु सर्पिः आतपवर्ष्या आपः शष्पाणि तोक्मानि सुरा दूर्वा इत्यष्टौ क्षिप्तानि भवन्ति। महावेदेः दक्षिणाया स्पयवर्तन्या तामासन्दीं प्रतिष्ठापयन्ति, तस्या अन्तर्वेदि द्वौ पादौ, बहिर्वेदि द्वौ। अथ यजमानः पश्चादासन्दीमुपविश्य दक्षिणं जानु आच्य तामुभाभ्यां पाणिभ्यामालभ्य अभिमन्त्रयते

प्राह्मणोक्तेन मन्त्रेण । अभिमन्त्र्य तामारोहति अग्रे दक्षिणेन जानुना, अथ सव्येन तेनैव मन्त्रेण । अथ पुरोहितः अपांशान्ति वाचयति शिवेन मा चक्षुषा इति । अथोदुम्बरशाखामन्तर्धाय यजमानमभिषिञ्चति इमा आपः शिवतमा० याभिरिन्द्रमभ्यषिञ्चत् प्रजापतिः० महान्तं त्वा महीनां० इति तिसृभिर्ऋग्भिः, देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्याय इति यजुषा भूर्भुवःस्वः इति च व्याहृतिभिः । व्याहृतिवर्जमेके अशर्वभीमस्य । अथ जुहोति ब्रह्म प्रपद्ये स्वाहा, क्षत्रं प्रपद्ये स्वाहा इति । अथ सुराकंसं यजमानहस्ते आदधाति स्वादिष्ठया मदिष्ठया इति ऋचा । आधाय शान्तिं वाचयति नाना हि वा देवहितं० सदस्कृतं० इति । यजमानः सुरां भूयः पीत्वा शेषं मित्राय प्रयच्छति । उदुम्बरशाखा परिकर्मी भूमौ प्रतिष्ठापयति । शाखायां पादौ प्रतिष्ठाप्य प्रतितिष्ठामि द्यावापृथिव्योः० इति प्रत्यवरोहं यजमानो जपति । अथ प्रत्यवरोहेण प्रत्यवरुध्य उपरथं कृत्वा प्राङासीनो 'नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मणे' इति त्रिर्नमस्कृत्य 'वरं ददामि जित्या अभिजित्यै विजित्यै संजित्यै' इति वाचं विसृजते । उपोत्थाय आहवनीये समिधमभ्यादधाति समिदसि समेद्ध्वेन्द्रियेण वीर्येण स्वाहा इति । आधाय समिधं प्राङ् उदङ् प्राङुदङ् वा त्रीणि पदानि अभ्युत्क्रामति ( उक्थ्या मार्गे पुर्दे पुर्दे ) ऋतिरसि दिशा० इति प्रतिकर्म । तेनैव मन्त्रेण अपराजिता ( ऐशानीं ) दिशमुपतिष्ठते । उपस्थाय 'अप प्राच विश्वाँ अमित्रान्० इति अमित्राणां व्यपनुत्तिं कुर्वन् गृहमभ्येति । एत्य गृहान् पश्चात् गृहस्याग्रे रुपविश्य अन्वारब्धाय पुरोहितः कंसेन चतुर्गृहीतास्तिस्र आज्याहुतीः ऐन्द्रीः प्रपदं नाम जुहोति—पर्यूषु प्रधन्व वाजसातये परिवृत्रा भूर्नद प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये । सह प्रजया पशुभिर्नि सक्षणिर्द्विषस्तरध्या ऋणयान ईयसे स्वाहा ॥ अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये वाजाँ अभि पवमान प्रगाहसे स्वाहा ॥ अजीजनो हि पवमान सूर्यं विधारे श स्वर्म प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये । सह प्रजया सह पशुभिः वनना पयो गोजीरया रम्भमाणः पुरं ध्या स्वाहा ॥ इति । अथान्ततः प्रजातिमाशास्ते इह गावः प्रजायध्वं० इति । ३७।१–७.

अभिषेकान्तक्षत्रिययागोदाहरणं जनमेजयः पारिक्षितः। ३७।७।९.

अभिष्टव : प्रवर्ग्ये । पूर्वं पटलम् । तं संभृत्य (प्रवर्ग्यकर्मोपयुक्तसाधनसंभारं संपाद्य ) अध्वर्युप्रतिप्रस्थातारौ आहतुः 'महान् प्रवर्ग्येण प्रचरिष्यामो होतर्घर्ममभिष्टुहि' इति । ४।१।३ । अथ होता ब्रह्मजज्ञानं प्रथमं । ४।२।१। इय पित्र्ये ।२। महान् मही अस्तभाय इति ब्राह्मणस्पत्यां । ३ । अभि त्यं देवं सवितारं इति सावित्रीं । ४ । (एताश्चतस्रः शाखान्तरस्था आश्वलायनेन पठिताः ।४।६।३)। संसीदस्व महाँ असि इति महावीरस्य हरे स्थापनार्थां । ५ । अञ्जन्ति यं इति महावीराय अज्यमानायाभिरूपां ।६। पतङ्गमक्त० यो नः सनुत्यो० भवानो अग्ने० इति द्वे द्वे । ७ । कृणुष्व पाजः इति पञ्च राक्षोघ्नीः ।८। परि त्वा गिर्वणो गिर० अधिद्वयोरदधा० पुरू वे अन्यद्० अपश्यं गोपा० ।९। ता एकविंशतिर्भवन्ति । स्रक्के द्रप्सस्य इति नव पावमान्यः।४।१।१।अयं वेनः० पवित्रं ते० तपोष्पवित्रं० वियत्पवित्रं० । २–४ । गणानां त्वा इति ब्राह्मणस्पत्य एकोनविंशत्यृचं ।४।४।१। प्रथश्च० तृतं घर्मतन्वः नाम, अपश्यं त्वा तृचं ।२–४। काराधत् काक्षीवतं आश्विनं नवर्चं ।५–७। आभात्यग्निः त्रैष्टुभं पञ्चर्चं ।८–१०। ग्रावाणेव त्रैष्टुभं अष्टर्चं ।११-१२। ईळे द्यावा जागतं पञ्चविंशत्यृच ।१३–१६। अहरवत् उपोत्तमा आग्नेया ( आवपनीया ) ।१७। ईळेद्यावीया उत्तमा परिधानीया ।१८–२० । इति नु पूर्वं पटलम् । अथोत्तरं । उपह्वये० हिंकृण्वती० अभि त्वा देव० समीवत्सं न० सं वत्स इव० यस्ते स्तनः० गौरमीमे० नमसेदुप० संजानाना उपसीदन्० आ दशभिर्विवस्व० दुहन्ति सप्तैकां० समिद्धो अग्निरश्विना० ( शाखान्तरस्था शौक्री) समिद्धो अग्निर्वृषणा ( शाखान्तरस्था सौत्री ) तदु प्रय-

मन्त्रे तन्त्रे वा कश्चित् किंचित् विरुद्धमाचरेत् तत् समीचीनमन्येन वाच्यं, अत्र तु नास्मिन् अहनि केनचित् कस्यचित् विवाच्यं ( इत्यतः ) अविवाक्यामित्येतदाचक्षते । संशये तु बर्हिर्वेदि स्वाध्यायप्रयोगः, अन्तर्वेदीत्येके । पत्नीसयाजोत्तर मानग्रहाय प्रसर्पेयुः । सदसः प्रसृप्य तीर्थदेशे मार्जयित्वा पत्नीशाला प्रपद्य 'समन्वारभध्व' इत्युक्त्वा जुहुयात् 'इहरमेह रमध्व' इत्यादिना । ततः पत्नीशालातः प्रसृप्य तीर्थदेशे मार्जयित्वा आग्नीध्रं प्रपद्य समन्वारभध्वं इत्युक्त्वा जुहुयात् उपसृजन् धरुणं० इति । ततः आग्नीध्रात् प्रसृप्य सदः सप्रपद्य यथायथं अन्ये ऋत्विजः व्युत्सर्पन्ति, ससर्पन्ति उद्गातारः सार्पराज्ञा ऋक्षु ( आयं गौः पृश्नि० ) स्तुवते । मनसा प्रस्तौति, मनसोद्गायति, मनसा प्रतिहरति, वाचा शंसति ( होता ) । अथ चतुर्होतॄन् होता व्याचष्टे । तदेव स्तुतमनुशंसति । चतुर्होतृव्याख्यानपद्धतिरतु औदुम्बरीं सर्वे समन्वारभन्ते 'इषमूर्जमन्वारभे' इति । वाचं यच्छति, न दिवा वाचं विसृजेरन् । किंतु अर्धास्तमिते आहवनीय परीत्य यदि हीनमकर्म० इति मन्त्रेण वाच विसृजेत् । ततः चतुर्होतृव्याख्यान, 'तेषा चित्तिः स्रुगासीऽऽऽत् । चित्तमाज्यमासीऽऽऽत् । इत्यादि दश पदानि । ततः अवग्रहवशको मन्त्रः 'ते वा एते ग्रहमगृह्णत । वाचस्पते विधे नामन्०' इत्यादिः । चतुर्होतृमन्त्रे अध्वर्यो. प्रतिगरः 'ओऽऽऽम् होतस्तथा होतः' इति अवस्तिते अवसिते दशसु पदेषु । अवग्रहमन्त्रपठनोत्तरं प्रजापतेस्तनूः नाम मन्त्रान् अनुद्रवति 'अन्नादा चान्नपत्नी च' इत्यादीन् । अथ ब्रह्मोद्यं वदन्ति 'अग्निर्गृहपतिरिति हैक आहु. सोऽस्य० ' इत्यादि । २४।४—६.

अविहृतं षोळशिन ( शस्त्र ) समृद्धो यजमानः शंसयेत् । १६ । ४ । ५—६.

अविहृतं षोडशिशस्त्र स्तोत्र च नाम परस्परव्यतिषङ्गरहितः ऋचा यथाधीतपाठः । १६।२।४ सायणः ।

अवेक्षणं पादप्रक्षालनोदकस्य पुरोहितेन ( प्रक्षालनात् प्राक् ) क्रियते 'अस्मिन् राष्ट्रे श्रिय० ' इति । ४० । ४.

अवेक्षण पादप्रक्षालनोदकस्यावशिष्टस्य पुरोहितेन क्रियते 'आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे' इति । ४० । ४.

अवेष्टेः राजसूयोत्पन्नायाः अपि पृथक् प्रयोगो भवति त्रैवर्णिकाधिकारिकः। ऐआ ५ । १ । १ सायणः ।

अव्रत्याचरणे (दिवा स्वापादि) आहिताग्नेः उपवसथेऽहनि कृते प्रायश्चित्तं = अग्नये व्रतपतये अष्टाकपालं निर्वपेत् । त्वमग्ने व्रतपा असि, यद्वो वयं प्रमिनाम इति याज्यानुवाक्ये । आहुतिं वा आहवनीये जुहुयात् अग्नये व्रतपतये स्वाहा इति । ३२ । ७ ।२.

अशनायापिपासयोः भागो दत्तः प्रत्येक इन्द्रियविषयभोगे । ऐआ २ । २२.

अश्रुकरणे आहिताग्निना उपवसथेऽहनि प्रायश्चित्तं= अग्नये व्रतभृते अष्टाकपाल निर्वपेत् । त्वमग्ने व्रतभृच्छुचिः० व्रतानि बिभ्रद् व्रतपा० इति याज्यानुवाक्ये । आहुतिं वा आहवनीये जुहुयात् अग्नये व्रतभृते स्वाहा इति । ३२।७।१.

अश्वः मेध्यः यज्ञार्हः । ६।८।१.

अश्वत्थस्य सृष्टिः । ३५।६।२.

अश्वस्य सृष्टि. । ऐआ २।२२.

अश्वस्य स्तुति. । २१।१।७—११.

अश्वमेधकर्तारो राजान. तत्पुरोहिताश्च 'ऐन्द्रमहाभिषेकफलोदाहरणानि' इत्यत्र द्र० ।

अष्टाचत्वारिंशस्तोमस्य विष्टुतिः

१७।६।९ सायणः ।

अष्टाश्रि. यूपः । ६।१।३—४.

असतोमङ्गलम् स्तोत्र [illegible] कृन्तन छेद., तदाश्रित [illegible] सायणः ।

अस्नातेन [illegible] चरणायाष्टाकपालं निर्वपेत् [illegible] अग्ने० इति [illegible] । आहुतिं [illegible] जुहुयात् अग्नये [illegible] स्वाहा इति । ३२।७

अहतं वासः दीक्षितसंस्कारः । तच सकृद्धौतं नवं श्वेतं सदशं वस्त्रम् । १।३।१५–१६.

अहरहः शस्येषु ककुन्तः प्रगाथाः । यस्तमिन्द्र स्वावसुं, यन्नवयो अतसीना ककुन्त्ववस्थाकृतं इति । ते च पैकृतारम्भहेतुत्वात् आरम्भणीयाः । २९।५।१-४.

अहरहःशस्येषु परिधानीयाः । मैत्रावरुणस्य नू ष्टुत०, ब्राह्मणाच्छंसिनः एवेदिन्द्र०, अच्छावाकस्य नूनं सा ते । २९।६।८-१०.

अहरहःशस्येषु सूक्तप्रतिपद. त्रिष्टुभः । मैत्रावरुणस्य अप प्राच इन्द्र, ब्राह्मणाच्छंसिनः ब्रह्मणा ते ब्रह्मयुजा, अच्छावाकस्य उरुं नो लोकमनु इति । के चित् एताः प्रगाथानां पुरस्ताच्छंसन्ति तत् तथा न कुर्यात् किंतु सूक्तानां पुरस्तादेव शंसनीयाः । आशु व्याहावो नास्ति २९।५।५-१४, ६।१-७.

अहरहःशस्यानि अहीने माध्यंदिने । ककुन्तः प्रगाथाः, प्रतिपदः अहीनसूक्तानि च । २९।१।२-४.

अहरहःशस्यानि सूक्तानि । २९। ४-७ । मैत्रावरुणस्य सद्यो ह जातो वृषभः इति सूक्तात् पुरस्तात् वैश्वामित्र पञ्चर्चम् ।२९।४।१-६ । ब्राह्मणाच्छंसिनः उदु ब्रह्माण्यैरत इति वासिष्ठ षड्च संपातादुपरिष्टात् । ७-१२ । अच्छावाकस्य अभितष्टेव दीधया इति वैश्वामित्र अनिरुक्तं दशर्चं संपातादुपरिष्टात् ।१३-२२.

अहर्गणेषु शस्त्राणि आरम्भणीयाः । मैत्रावरुणस्य मैत्रावरुणशस्त्रे ऋजुनीती नो वरुणः । ब्राह्मणाच्छंसिनः ऐन्द्रे शस्त्रे इन्द्र वो विश्वतस्परि । अच्छावाकस्य ऐन्द्राग्ने शस्त्रे य सोम आ सुतेनरः । २७।३। १–९.

अहिर्बुध्नीया ऋक् उत नोऽहिर्बुध्न्यः । इयं आग्निमारुते शस्त्रे आपोहिष्ठीयोत्तरम् ।१३।१२।९.

अहीनसूक्तानि । २९।२। ४-११ । होतकाः प्रातःसवने षडहस्तोत्रीयान् शस्त्वा माध्यंदिने अहीनसूक्तानि शंसन्ति ।४। मैत्रावरुणस्य आसत्यो यातु मघवाँ ऋजीषी, ब्राह्मणाच्छंसिनः अस्मा इदु प्रतवसे, अच्छावाकस्य शासद् वह्निर्जनयन्त । तानि पञ्चसु अहःसु भवन्ति (गवामयने) चतुर्विंशे, अभिजिति, विषुवति, विश्वजिति महाव्रते च ।२९।२। ४–११.

अहीनस्य युक्तिर्वियुक्तिश्च (योगो विमोकश्च) ब्राह्मणाच्छंसिनः प्रातःसवने व्यन्तरिक्षमतिरत् इति पर्यासतृचस्य अन्तिमया इन्द्रेण रोचना दिवः इति परिधानीयया योगः, माध्यंदिने एवेदिन्द्रं इति परिधानीयया विमोकः । अच्छावाकस्य आहं सरस्वतीवतोः इति प्रातःसवने परिधानीयया योगः, माध्यंदिने नूनं सा ते इति परिधानीयया विमोकः । मैत्रावरुणस्य प्रातःसवने ते स्याम देव वरुण इति परिधानीयया योगः, माध्यंदिने नू ष्टुत इति परिधानीयया विमोकः । २९।७। १-९.

अहीनाः परिधानीयाः । मैत्रावरुणस्य प्रातःसवने ते स्याम देव वरुण, माध्यंदिने नू ष्टुत इन्द्र नू गृणानः, तृतीयसवने इयमिन्द्रंवरुणमष्टमे गीः । ब्राह्मणाच्छंसिनः प्रातःसवने इन्द्रेण रोचना दिवः, माध्यंदिने एवेदिन्द्रं वृषण, तृतीयसवने बृहस्पतिर्नः परिपातु । अच्छावाकस्य प्रातःसवने आहं सरस्वतीवतोः, माध्यंदिने नूनं सा ते प्रति, तृतीयसवने उभा जिग्यथुः ।२७।५।१-५ सायणः।

अहीने अग्निष्टोमे च परिधीयाः । मैत्रावरुणस्य प्रातःसवने ते स्याम देव वरुण, माध्यंदिने नू ष्टुत इन्द्र । ब्राह्मणाच्छंसिनः प्रातःसवने व्यन्तरिक्षमतिरत् इति, पर्यासे तृचे इन्द्रेण रोचना दिव इति, माध्यंदिने एवेदिन्द्रम् । अच्छावाकस्य प्रातःसवने आहं सरस्वतीवतोः, माध्यंदिने नूनं सा ते । २७।४-५.

अहीने माध्यंदिने अहरहःशस्यानि, ककुन्तः प्रगाथाः, प्रतिपदः, अहीनसूक्तानि च । २९।१।३-४.

अहीनेषु, द्वादशाहस्य अहीनस्य धर्माणामतिदेशः ।

आख्यायिका अग्निष्टोमस्तुत्यर्था ।१४।१।१, १४।४।१.

" अदितेः प्रायणीयोदयनीययोः । २।१।३-४.

" अनुष्टुप्प्रशंसार्था । १२।२।१-५, ३।१।५, ४।१-२.

" अपोनप्त्रीयगतमन्त्रायन्ति इत्यृक्प्रशंसार्था । ८।२।७-८.

" आग्निमारुतशस्त्रार्था । मृगः व्याधः रोहिणी । प्रजापतिः स्वा दुहितरमभ्य.

ध्यायत् इत्यादि । १३।९।१-६,
१०।१-३.
" आश्विनशस्त्रप्रतिपदर्था । १७।१-३.
" आश्विनशस्त्रे ककुसहस्रार्था ।
१७।२।१.
" इन्द्रस्य छन्दसा च प्राधान्यसिध्यर्था।
१६।५।१-५.
" इन्द्रस्य मरुता सरस्वतीयशस्यायाज्यायाश्च प्रशसार्था । १२।९।१-३.
" उक्थ्ययागार्था । १०।५ ६
" उपसदर्था । ४।६।१ ६
" ऐशान्याः दिशः अपराजितत्वार्था ।
३।३।५-६.
" कवषस्य ऐलूषस्य अपोनप्त्रीयसूक्तप्रशसार्था । ८।१।१-४.
" क्षत्रियस्य सोममक्षराहित्यार्था ।
३५।१-५.
" तानूनप्त्रार्था । ४।७।४-८.
" तूष्णींशसार्था । ९।७।१-४.
" दीक्षणीयार्था। १५।१।१-८.
" देवनीथनामकमन्त्रप्रशसार्था ।
३०।८।२-३, ९।१.
" द्वादशाहस्य व्यूढत्वार्था । १ ।५।१.
" द्विदेवत्यग्रहार्था । ९।१।१ ३
" नाभानेदिष्ठस्य । २०।९।१-७
" निष्केवल्यशस्त्रयाज्याधाय्यार्था ।
१२।१०।१-४, ११।१-९
" प्रवर्ग्यार्था । ४।१-२.
" प्रातरनुवाकप्रथमऋगर्था ।७।६।१,४
" यूपस्य तथैव स्थापनार्था । ६।२।१.
" यूपार्था । ६।१।१, ३।२.
" वपाहोमप्रशसार्था । ७।३।६.
" सवनीयपुरोडाशगतपयस्याप्रशसार्था ।
८।४।१०.
" -सवनीयपुरोडाशविधानार्था। ८।५।१.

" स्तोत्रीयतृचार्था निष्केवल्यशस्त्रे ।
१२।१२।१-२.

'आगन्म वृत्रहन्तम' इति द्वितीय तृच प्रथम शसेत् 'विशो विशो वो अतिथिं' इत्याज्यशस्त्रे सति महाव्रते, पुष्टिकामस्य । ऐआ १।१।५-१४.

आगू नास्ति द्विदेवत्याना द्वितीययाज्यायाः ९।४।४-६.

आग्निमारुतं शस्त्र अग्निष्टोमे तृतीयसवने होतु अन्तिममिद त्वरया शस्तव्यम् १३।९ १४ । प्रतिपत्– 'वैश्वानराय पृथु पाजसे' सूक्त, तत्र प्रथमा ऋक् अनवानं, अत्र आदौ एव विचार्य निश्चेतव्य पश्चात निर्णयम् । १३।११।१-४ । मारुतं शसति प्रत्यक्षतः सूक्त, प्रगाथद्वय यज्ञायज्ञावो० देवो वो द्रविणोदा० मध्ये योनिं चानुरूप च अस्य स्तोत्रियानुरूपौ वैश्वानरीय मारुतसूक्तोत्तर प्रगाथद्वयम्। १३।११।५ ८ । जातवेदस्य प्रतत्पर्सी, आपोहिष्ठीय 'आपो हि ष्ठा' इत्यारभ्य शनै. शस्तव्य, अहिर्बुध्नीया 'उत नोऽहिर्बुध्न्य' । १३।१२।१ ५ । देवाना पत्नी 'देवाना पत्नीरुशती रवन्तु' ऋग्द्वयम्, । राका 'राकामह' ऋग्द्वयम् । राका पूर्वमेके तत्र । पावीरवी, पावीरवी कन्या । यामी 'इय यम प्रस्तर०मातली क०३' । पित्र्या, 'उदीरतामवर' तिस्र । पित्र्यासु प्रत्यृचमाहाव । यामीं उत्तरामेके पित्र्याभ्य । १३।१३।१ १९। अनुपानीया ऐन्द्रीश्चतस्र स्वादुष्किला।, अत्र मद्वान् प्रतिगर. मदामो दैव इति । वैष्णुवारुणी, यमोरोजसा स्कभिता। वैष्णवी, विष्णोर्नु क वीर्याणि, । प्राजापत्या, तन्तु तन्वन् रजसो। परिधानीया, एवा न इन्द्रा मघवा । भूमिमुपस्पृशन् परिदध्यात् । याज्या आग्निमारुती, अग्नेमरुद्भि शुभ०। १३।१४।१ १४.

आग्निमारुत शस्त्र यज्ञायज्ञीय ( प्रयोगपुस्तकार्थ ) अग्निष्टोमे तृतीयसवने होतु । सूक्त आग्नेयं निविद्धान वैश्वानराय पृथु १–१० ऋच , निविद । ८।१ १५, पूर्वोक्तसूक्तशेष एकादशी ऋक्, मा नः करत्य वेत ऋक्, सूक्त मारुत निविद्धान प्रत्वक्षस. प्रतवसो १-९ ऋच., निविद । ९।१–१४, मारुतसूक्तशेष.

षष्ठी ऋक्, प्रतिपत् प्रगाथः स्तोत्रियः यज्ञायज्ञावो, अनुचरः प्रगाथ' देवो वो द्रविणोदा, सूक्त आग्नेय निर्विद्धान प्रतव्यसीं नव्यसीं १–७ ऋचः, निविद. १०.१-१६, आग्नेयसूक्तशेषः अष्टमी ऋक्, तृचः आपो हि ष्ठा, ऋक् उत नोऽहिर्बुध्न्यः, द्वृच. देवाना पत्नी रुशती, द्वृचः राकामह सुहवा, ऋक् पावीरवी, ऋक् इय यम प्रस्तर, ऋक् मातली कव्यैर्यमो, ऋक् उदीरतामवर, ऋक् आह पितृन्, ऋक् इद पितृभ्यो नमो, द्वृचः स्वादुष्किलाय, ऋक् ययोरोजसा स्कभिता, ऋक् विष्णोर्नुक, ऋक् तन्तु तन्वन् रजसो, ऋक् 'एवा न इन्द्रो मघवा' परिधानीया।

आग्निमारुत शस्त्र छन्दोमप्रथमेऽहनि द्वादशाहे। प्रतिपत् तृचः गायत्रः वैश्वानरो अजीजनत्, सूक्त मारुत गायत्र प्रयद्धित्थुमिष, ऋक् जातवेदस्या जातवेदसे सुनवाम, सूक्त जातवेदस्य गायत्र दूत वो विश्ववेदसम्। २३।२।१४–१६.

आग्निमारुत शस्त्र छन्दोमद्वितीयेऽहनि प्रतिपत् तृच गायत्रः ऋतावान वैश्वानर, सूक्त मारुत गायत्र क्रीळ व. शर्धो, ऋक् जातवेदस्या जातवेदसे सुनवाम, सूक्त जातवेदस्य अग्निं नरो दीधितिभि। २३।४।१५–१८.

आग्निमारुतं शस्त्र छन्दोमतृतीयेऽहनि प्रतिपत् तृचः वैश्वानरो न ऊतये, सूक्त मारुत गायत्र महो यस्य हि क्षये, ऋक् जातवेदस्या जातवेदसे सुनवाम, सूक्त जातवेदस्य गायत्र प्राग्नये वाचमीरय। २४।२।१९–२१.

आग्निमारुत शस्त्र प्रथमेऽहनि पृष्ठ्ये षडहे। इदमेवाग्निष्टोमेऽपि,परन्तु अधिकमपि किंचित्। प्रतिपत् सूक्त वैश्वानराय पृथुपाजसे, सूक्तं मारुत प्रत्वक्षस. प्रतवसो, ऋक् जातवेदस्या जातवेदसे सुनवाम, सूक्त जातवेदस्य प्रतव्यसीं नव्यसीम्। २०।२।१०–१४.

आग्निमारुत शस्त्र द्वितीयेऽहनि पृष्ठ्ये षडहे प्रतिपत् तृचः पृक्षस्य वृष्णो, सूक्त मारुत वृष्णे शर्धाय सुमखाय, ऋक् जातवेदस्या जातवेदसे, सूक्त जातवेदस्य यज्ञेन वर्धत जात। २०।४।८–११.

आग्निमारुतं शस्त्र तृतीयेऽहनि पृष्ठ्ये षडहे प्रतिपत् सूक्त वैश्वनराय धिषणा, सूक्त मारुत धारावरा मरुतो, ऋक् जातवेदस्या जातवेदसे, सूक्तं जातवेदस्यं त्वमग्ने प्रथमो अङ्गिरा। २१।२।१४।१७.

आग्निमारुत शस्त्र चतुर्थेऽहनि पृष्ठ्ये षडहे प्रतिपत् सूक्त वैश्वानरस्य सुमतौ, सूक्त मारुत क ईं व्यक्ता नरः, ऋक् जातवेदस्या जातवेदसे, सूक्त जातवेदस्य अग्निं नरो दीधितिभिः। २१।५।१२-१७.

आग्निमारुतं शस्त्र पञ्चमेऽहनि पृष्ठ्ये षडहे प्रतिपत् तृचः हविष्पान्तमजर, सूक्तं मारुतं वपुर्नु तच्चिकितुषे, ऋक् जातवेदस्य जातवेदस्या, तृचः जातवेदस्यः अग्निर्होता गृह। २२।३।११-१४.

आग्निमारुत शस्त्र षष्ठेऽहनि पृष्ठ्ये षडहे प्रतिपत् सूक्त अहश्च कृष्णमह, सूक्त मारुत मध्वो वो नाम, ऋक् जातवेदस्य जातवेदसे, सूक्त जातवेदस्य स प्रत्नथा सहसा। २२।१०।५-१०

आग्निमारुत शस्त्र महाव्रते। प्रतिपत् सूक्त वैश्वानराय धिषणा। (१–१५ ऋच.), सूक्त मारुत प्रयज्यवो मरुतो भ्राज। (१–१० ऋच.), ऋक् जातवेदस्या जातवेदसे, सूक्त जातवेदस्य इमं स्तोममर्हते जात। (१–१६ ऋच)। ऐब्रा १।२२।११–१४.

आग्निमारुत शस्त्र महाव्रते। सामगैः यज्ञायज्ञीये सामनि प्रयुक्ते सति सूक्त वैश्वानराय धिषणा, ऋक् स नः करत्यर्वते, सूक्त प्रयज्यवो मरुतो।(१-१० ऋचः), प्रतिपत् प्रगाथः यज्ञायज्ञा वो, अनुचर. प्रगाथः देवो वो, ऋक् जातवेदस्या जातवेदसे, शस्त्रशेषः प्राकृतः आपो हि ष्ठा इत्यादिः। ऐब्रा ५।१३।१५.

आग्निमारुत शस्त्र महाव्रते सामगैः इलान्दे सामनि प्रयुक्ते सति, तत्रापि एकतृचगानपक्षे पूर्वोक्तप्रगाथद्वयस्थाने अग्ने तव श्रवो इति षट् ऋच. प्रतिपदनुचरौ कर्तव्यौ। तृचद्वयगानपक्षे तु अग्निं न स्ववृक्तिभिः इति षट् ऋच. अनुचर. कर्तव्यः। ऐब्रा ५।१३।१५.

आग्निमारुती ऋक् याज्या आग्निमारुतशस्त्रस्य अग्ने मरुद्भिः शुभयद्भिः। १३।२४।१४.

आग्नीध्र पात्नीवतग्रहस्य याज्या उपांशु आह, वषट्कारो नास्ति, नेष्टुरुपस्थ आसीनो भक्षयति।

२६।३।८-११.

आग्नीध्रस्थानं पृष्ठतः कृत्वा अग्नीषोमप्रणयनीयासु त्रयोदश्याः अन्तिमं पादं अन्वाह होता । ५।४।१५-१६.

आग्नीध्रस्य प्रातःसवने प्रस्थितयाज्या उक्षान्नाय वशान्नाय।२८।२।५। माध्यंदिने आपूर्णो अस्य कलशः। २८।३।१२। तृतीयसवने इमं स्तोममर्हते। २८।४।१२। पात्नीवतग्रहे प्रस्थितयाज्या तृतीया ऐभिरग्ने सरथम् । २८।६।४.

आग्नीध्रस्य उक्थ ऊदः पशुभागः अजिनं च यः श्वः सुत्यामाह । ३१।१।२.

आग्नीध्रीयमण्डपे वासः ऋत्विजां सुत्यायाः प्राचीनाया रात्रौ । १०।४।१.

आग्नीध्रीयादेव धिष्ण्येषु अग्निविहरणम् । १०।४।१-२

आग्नीध्रीये होता, मरुत्वतीये शस्त्रे संस्थिते, तिस्र आज्याहुतीर्जुहोति महाव्रते । ऐआ. ५।१।१०-१३

आग्नीध्रीये होमः पत्नीशालायाः संसृप्य तीर्थे मार्जयित्वा आग्नीध्रे संप्रपद्य होमः उपसृज धरुणं इति । द्वादशाहस्य दशमेऽहनि मानसग्रहे । २४।३।१४-१६.

आग्नीध्रे अध्वर्युणा आहुत्या हूयमानाया अग्नीषोमप्रणयनीयासु दशमीमाह होता अग्निष्टोमे । ५।४।१२.

आग्रयणेन अनिष्ट्वा नवान्नप्राशने प्रायश्चित्तम् । अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् । वैश्वानरो अजीजनत्, पृष्टो दिवि पृष्टो अग्निः इति याज्यानुवाक्ये । आहुतिं वा आहवनीये जुहुयात् अग्नये वैश्वानराय स्वाहा इति । ३२।८।१.

आचार्यं राजहस्ते सुराकंसमादधाति स्वादिष्ठया मदिष्ठया इति ऐन्द्रमहाभिषेके । ३९।६।३.

आचार्याय दक्षिणादानं ऐन्द्रमहाभिषेके, सहस्रं, हिरण्यं, क्षेत्रं, चतुष्पात्, अपरिमितम् । ३९।६।२

आजिज्ञासेन्या. ब्राह्मणाच्छंसिशिल्पे षष्ठेऽहनि अर्धर्चशः शंसति । इदेत्य प्रागपागुदक् इति चतस्रः ऋचः शाखान्तरगता. खे पठिताः ।३०।७।१८.

आज्यं हिरण्यस्य प्रतिनिधिः । ७।५।६.

आज्यभागौ अप्सुमन्तौ कारीर्यादिवर्षकामेष्टिषु । अप्स्वग्ने सधिष्टव, अप्सु मे सोमो अब्रवीत् । आश्व. २।१३।३-४ । अवभृथे च । ६।१३।४.

आज्यभागौ आग्नेयौ अन्वारम्भणीयाया समिधाऽग्निं दुवस्यत, एह्यूषु ब्रवाणि ते । बुद्धिमदिन्दुमतौ इत्याचक्षते । आश्व. २।८।७-८.

आज्यभागौ आतिथ्याया समिधाऽग्निं दुवस्यत, आप्यायस्व समेतु ते । आश्व. ३।६।१-४

आज्यभागौ जीवातुमन्तौ आयुष्कामेष्ट्यां आ नो अग्ने सुचेतुना, त्वं सोम महे भगम् । आश्व. २।१०।२-३। पित्र्याया च । आश्व. २।१९।१६.

*आज्यभागौ दर्शपूर्णमासयोः जुषाणो अग्निराज्यस्य वेतु, जुषाणः सोम आज्यस्य हविषो वेतु, इति । ३।६।५। सायणः ।*

आज्यभागौ दीक्षणीयायामग्निष्टोमे पूर्वमीजानस्य, त्वमग्ने सप्रथा असि, सोमयास्ते मयोभुवः । पूर्वमीजानस्य अग्नि. प्रत्नेन मन्मना, सोम गीर्भिष्ट्वा इति केचित्, वार्त्रघ्नौ एवेति सिद्धान्तः । अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः । १।४।१-७.

आज्यभागौ परोक्षवार्त्रघ्नौ साकमेधेषु मरुद्भ्यः क्रीडिभ्य. इत्यत्र । उत ब्रुवन्तु जन्तवः, अय कृत्नुरगृभीत । आश्व २।१८।१५.

आज्यभागौ पावकवन्तौ पवित्रेष्ट्या ऋचावेव । आग्नेयस्य अग्नी रक्षांसि सेधति, यत्ते पवित्रमर्चिषि । सौम्यस्य यो धारया पावकया, आ कलशेषु धावति पवित्रे । आश्व २।१२।३-६.

आज्यभागौ पुष्टिमन्तौ अग्न्याधेये तृतीयस्या अग्नी षोमीयेष्टौ अग्निना रयिमश्नवत्, गयस्फानो अमीवहा । आश्व २।१।१७ । साकमेधेषु आदित्येष्टौ । आश्व २।१९।४० । यद्धमेर्धीये । आश्व २।१८।५.

आज्यभागौ रक्षितवन्तौ रक्षघ्नयन्यामिष्टौ अग्ने रक्षाणो अंहसः, त्वं न. सोम विश्वत । आश्व. २।१०।५.

आज्यभागौ वार्त्रघ्नौ पौर्णमास्या अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिः । आश्व. १।६।१२.

आज्यभागौ वृधन्वन्तौ [illegible] मन्मना, सोम गीर्भिष्ट्वा वयं । आश्व [illegible]

आज्यशस्त्रे शंसने ऋक्क्रमः द्विविधः, ब्राह्मणोक्तः सूत्रोक्तश्च। सूत्रे एव विकल्प उक्तः।

| ब्राह्मणोक्तः | सांहितिकः (ऋसं १।१३।१-७) | |
|---|---|---|
| १ प्र वो देवाय | १ प्र वो देवाय | १ |
| २ दीदिवांसं | ५ ऋतावा यस्य | २ |
| ३ स नः शर्माणि | ४ स यन्ता विप्र | ३ |
| ४ उत नो ब्रह्मन् | ६ स नः शर्माणि | ४ |
| ५ स यन्ता विप्र | ३ दीदिवांसं | ५ |
| ६ ऋतावा यस्य | २ उत नो ब्रह्मन् | ६ |
| ७ नू नो रास्व परिधानीया | नू नो रास्व परिधानीं ७ | ७ |

ऐब्रा. १०।८।१-११, १०।९।३-११.

आज्य आशिर-पशुविधिः अग्निष्टोमे तृतीयसवने। ११।३।२-३.

आज्याहुतिः प्रशस्ता। ७।४।१.

आज्याहुतीः तिस्रः होता महाव्रते माध्यंदिने मरुत्वतीये शस्त्रे संस्थिते विसंस्थितसंचरेण निष्क्रम्य आग्नीध्रीये औदुम्बरेण स्रुवेण जुहोति अनुमामिन्द्रो, आदित्या मा विश्वे, पितरो मा विश्व इतिमन्त्रैः। ऐआ. ५।३।१०-१३.

आतपवर्ष्या आपः चमसे पात्र्या वा अभ्यानेयाः ऐन्द्रमहाभिषेके संभारः। ३९।३।१। यज्ञाङ्गराजाभिषेके च चमसे प्रक्षेप्याः। ३७।१।२.

आतानः = विस्तारः, रचना, प्रयोगप्राशुभावः। २१।४।१२ इ०, ऐआ. ५।१।८.

आतिथ्या अग्निष्टोमे। नवकपालः पुरोडाशः। ३।४।३। विष्णुर्देवता। ४। अग्निमन्थनं। ३।४।६, १४।२।६, ३।५।१-४४। आज्यभागयोः पुरोनुवाक्ये। ३।६।१४। याज्ये। ५। प्रधानस्य याज्यानुवाक्ये। ६-८। संयाज्ये। ९।१०। पुरोडाशा इयं। ११, ३५।१।३। अनुयाजप्रतिषेधः। ३।६।१२-१५। हविरातिथ्यं निरुप्यते सोमे राजनि आगते। ३।४।१-२। अग्निं मन्थति सोमे राजन्यागते। ३।४।६.

आतिथ्यबर्हिरेव उपसत्सु अग्नीषोमे पशौ च। ४।८।१.

आतिथ्याय अश्वन्तं नाद्रियन्ते। ऐआ. १।१।१०.

आत्मनः = देहमध्यस्य, उपस्थानं चित्यामेः, महाव्रते माध्यंदिने। होता। ऐआ. ५।२।६.

आत्मा अश्रुतः अगतः अमतः अनतः अदृष्टः अविज्ञातः अनादिष्टः श्रोता मन्ता द्रष्टा आदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषा भूतानामन्तरपुरुषः। स मे आत्मा इति विद्यात्। ऐआ. ३।१०।१९.

आत्मा = देहमध्यः निष्केवल्यशस्त्रस्य महाव्रते। तदिदास इति सूक्त नवर्चं, ता सुते कीर्ति पङ्क्त्यर्चं, भूय इद् वावृधे पञ्चर्चं, नृणामुत्वा नृतमं तृचं, सूददोहाः=ता अस्य सूददोहसः ऐआ. ५।६।१,११। के चित्तु तदिदास सूक्तगततृतीयस्या ऋचः तृतीयं पादमुद्धृत्य। दक्षिणपक्षगताभिरवाशुरप्रगाथगतस्य 'अश्वायन्तो मघवन्निन्द्र वाजिनः' इत्यस्य पादस्य स्थाने पठनीयः, अश्वायन्तो इत्येत च पूर्वोक्ततृतीयपादस्थाने पठनीयः। एव तदिदासगूक्ततृतीयस्या ऋचः चतुर्थं पादं ततः उद्धृत्य उत्तरपक्षगतत्वामिद्धिप्रगाथे 'गामश्वं रथ्यमिन्द्र सकिर' इत्यस्य स्थाने पठनीयः, गामश्वं इत्येतं च पूर्वोक्तचतुर्थपादस्थाने पठनीयः इति वदन्ति। ऐआ. ५।६।२-३.

आत्मा निष्केवल्यस्य महाव्रते। तदिदास, तां सुते, भूयइद्, नृणामुत्वा, इति त्रयोविंशतेः ऋचां 'नदं व ओदतीना' इत्यनया ऋचा पादशः पादशो विहरणं कर्तव्यम्। किं च तदिदासऋचः प्रथमद्वितीयचतुर्थपादेषु पु, रु, वः, इति त्रीण्यक्षराणि यथासंख्यं स्थापनीयानि। तथा सति आत्मस्था एका ऋक्, नद व ओदतीना इत्येषा एका ऋक्, उभयोः पादशो मिश्रणे द्वे बृहत्यौ भवतः एव च २३ + २३ = ४६ एतावत्यो बृहत्यः संपद्यन्ते। तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेष नृम्णः। सद्यो जज्ञानो निरिणाति शत्रून्, अनु यं विश्वे मदन्त्यूमाः इति ऋक् प्रथमा। नदं व ओदतीना, नदं यो युवतीनाम्। पतिं वो अघ्न्यानां, धेनूनामिषुध्यसि इत्येका ऋक् नदः नाम। अनयोर्मिश्रणं यथा "अपि निदर्शनायोदाहरिष्यामः-तदिदास भुवनेषु ज्येष्ठं पु नदं व ओदतीनाम्। यतो जज्ञ

उग्रस्त्वेषनृम्णो ह नदं यो युवतीनोऽऽऽम् । ( एषा एका बृहती निष्पन्ना ) सद्यो जज्ञानो निरिणाति शत्रून् पतिं वो अघ्न्यानाम् । अनु यं विश्वे मदन्त्यूमाः धो धेनूनामिषुध्यसोऽऽऽम् ।" एषा द्वितीया बृहती निष्पन्ना। इदं बृहतीद्वयं इत्थमेव त्रिःपठनीयं प्रतिपत्त्वात् । अथ तदिदासेत्याद्यारम्भभागरूपानां सर्वासां ऋचां नर्देन विहरणं उक्तरीत्यैव कर्तव्यं 'पु—ह—षः' इत्यक्षराणि तु प्रथमायामेव ऋचि, नोत्तरासु । ऐआ. १।१३।१,७; १।१५-१६; ५।६।४-६.

आत्मा ब्रह्म चिद्रूपम् । ऐआ. २।२५.

आत्रेयस्य दक्षिणो बाहुः पशुभागः । ३१।१।२.

आदित्यः अग्नेर्जायते । ४०।५।१३.

आदित्यग्रहः अग्निष्टोमे तृतीयसवनारम्भे । १३।५।१-३.

आदित्यग्रहस्य याज्या आदित्यासो अदितिर् । इयं महती । १३।५।२.

आदित्यग्रहे नानुवषट्करोति, न भक्षयति । १३।५।३.

आदित्यात्चन्द्रमा जायते । ४०।५।१४.

आदित्यानां सृष्टिः 'तस्य ( प्रजापतेः ) यद्रेतसः प्रथममुददीप्यत तदसावादित्योऽभवत्.' 'अथ तृतीयमदीदेदिव इ आदित्या अभवन्' । १३।१०।१.

आदित्यानामयनं = अतिरात्रः, उभयप्रश्चतुर्विंशः, शेषं सर्वे अभिप्लवाः षडहाः, अन्ते च महाव्रतं, अतिरात्रः । १८ ३।५-६,८.

आदित्योपस्थानं होतुः महाव्रते माध्यंदिने मार्जालीयहोमोत्तरं, तत्र मार्जालीयहोममन्त्रा एव स्वाहाकाररहिता दश, द्वौ चाधिकौ 'एहोवाऽऽऽइदं मधूऽऽऽइदं मधु, इमं तीव्रमुतं पिबाऽऽऽइदं मधूऽऽऽइदं मधु' इति । तत्र आदित्ये प्राक्स्थिते प्राङ्मुखो होता, आदित्ये प्रत्यक्स्थिते तु प्रदक्षिणं पर्यावृत्य प्रत्यङ्मुखः सन्नुपतिष्ठेत । ऐआ. ५।१।२६.

आदित्यो वै अस्तं यन् अग्निमनुप्रविशति । ४०।५।१.

आधवनीयः पञ्चमसंभारेषु उपस्तपनीयः । ३५।६।४.

आध्वर्यवं यजुषा । २५।७।३-४.

आनुष्टुभं चतुर्थमहः पृष्ठ्ये षडहे । २१।४।६.

आन्ध्राः विश्वामित्रपुत्रा एव शप्ताः सन्तः संजाताः । ३३।६।२.

आपः आतपवर्ष्याः चमसे पात्र्यां वा समानेयाः ऐन्द्रमहाभिषेके संभारेषु । ३९।३।१ । यज्ञाङ्गराजाभिषेके च चमसे समानेयाः । ३७।१।३ ।

आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे । ४०।४।९.

आपः शूद्राणां भक्षो मतादिषु । ३५।३।४.

आपोहिष्ठीयः तृचः शनैःशनैः शंस्तव्यः अग्निष्टोमे आग्निमारुते शस्त्रे जातवेदस्योत्तरम् । १३।१२।३-४.

आप्यायनं सोमाप्यायनं=जलेन प्रोक्षणम् । तत्र अंशुरंशुष्टे देव सोमाप्यायतां इत्यादिर्मन्त्रः । यजमान ऋत्विजश्च सर्वे कुर्वन्ति । ४।९।२-४.

आप्रियः नाम पशोः प्रयाजयाज्याः एकादश । १ समिधः,२ तनूनपात् वसिष्ठ शुनकभिन्नानां,नराशंसो वसिष्ठशुनकानाम्, ३ इलः,४ बर्हिः, ५ दुरः, ६ उषासानक्ता, ७ दैव्या होतारा, ८ तिस्रो देवीः, ९ त्वष्टा, १० वनस्पतिः, ११ स्वाहाकृतयः इति ।६।४।१-१६। यथार्षि । १६ । अत्र आश्वलायनः—समिद्धो अग्निर्निहितः पृथिव्यां ( ऋसं २।३।१-११ ) इति शुनकानां, जुषस्व नः समिधमग्ने अद्य ( ऋसं ७।२।१-११) इति वसिष्ठानां, समिद्धो अद्य मनुषो दुरोणे ( ऋसं १०।११०।१-११ अनाराशंसं ) इति सर्वेषां ( शुनकवसिष्ठभिन्नानां ) आश्व ३।२।६ । यथऋषि वा आश्व. ३।२।७। अत्र शौनकश्लोकः 'कण्वाङ्गिरोऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च । वसिष्ठःकश्यपो वाध्यश्वो जमदग्निर्गोतमः ॥ इति । अत्र गार्ग्यवृत्तिः—सुसमिद्धो न आवह ऋसं १।१३।१-१२ कण्वानां तनूनपान्नराशंससहितम् ।

समिद्धो अग्न आवह, ऋसं १।१४२।१-१३ कण्वभिन्नानामङ्गिरसाम् ।

समिद्धो अद्य राजसि „ १।१८८।१-११ अगस्त्यानां

अनाराशंसम् ।

समिद्धो अग्निर्निहितः ऋक्सं. २।३।१-११ शुनकाना अतनूनपात् ।

समित्समित्सुमना ,, ३।४।१-११ विश्वामित्राणा अनाराशंसम् ।

सुसमिद्धाय शोचिषे ,, ५।५।१-११ अत्रीणां अतनूनपात् ।

जुषस्व नः समिध ,, ७।२।१-११ वसिष्ठाना अतनूनपात् ।

समिद्धो विश्वतस्पतिः ,, ९।५।१-११ कश्यपाना अनाराशंसम् ।

इमां मे अग्ने समिधं ,, १०।७०।१ ११ वाध्र्यश्वाना अतनूनपात् ।

समिद्धो अद्य मनुषो ( ऋस १०।११०।१-११ ) शुनकवाध्र्यश्वभिन्नभृगूणां अनाराशंसम् ।

प्राजापत्ये तु ( पशौ ) जामदग्न्यः ( समिद्धो अद्य मनुषो ) सर्वेषां ( वसिष्ठशुनकसंहितानाम् । आश्व. ३।२।८.

आप्रियः जामदग्न्यः समिद्धो अद्य मनुषो द्वादशाहे प्राजापत्ये पशौ । १९।४।६-८.

आप्रियः पशुषु यथर्षि भवन्ति । १९।४।७.

: आयुष्यं सूक्तं कया शुभा सवयसः सनीळाः । ऋ३।१।१५. ऐब्रा. १।६।१२.

आरण्येनाग्निना अग्नीनां दाहे प्रायश्चित्तं, समारोपयेदरण्योः, ( असंभवे ) आहवनीयात् गार्हपत्याद्वा उल्मुकं समादाय दूरं गच्छेत्, ( तदसंभवे ) अग्नये संवर्गाय अष्टाकपालं निर्वपेत् । कुविदङ्ग नो गविष्टये, मा नो अस्मिन् महाधने इति याज्यानुवाक्ये । आहुतिं वा आहवनीये जुहुयात् अग्नये संवर्गाय स्वाहा इति । ३२।६।४.

आरम्भणीयस्तृचः मरुत्वतीयशस्त्रस्य माध्यंदिने अनुष्टुप् आ त्वा रथम् । १२।३।२.

आरम्भणीया ऋक् आज्यशस्त्रस्य प्रथमस्य प्र वो देवायाग्नये । १२।३।१.

' आरम्भणीयाः अहर्गणेषु शस्त्राणां, मैत्रावरुणस्य ऋजुनीती नो वरुणः, ब्राह्मणाच्छंसिनः इन्द्रं वो विश्वतस्परि, अच्छावाकस्य यत्सोम आसु ते । २७।३।१-६.

आरम्भणीयानि सूक्तानि उक्थ्ये तृतीयसवने ऐन्द्राणि जागतानि । मैत्रावरुणस्य चर्षणी धृतं, ब्राह्मणाच्छंसिनः ■ मंहिष्ठाय, अच्छावाकस्य ऋतुर्जनित्री, अन्ततश्च त्रैष्टुभं स वां कर्मणा इति । २८।७।१-४.

आरम्भणीया वैश्वदेवशस्त्रस्य तृतीयसवने तत्सवितुर्वृणीमहे । १२।३।३.

आरोपणं आसन्द्या यजमानस्य । ऐन्द्रे महाभिषेके वसवस्त्वा गायत्रेण छन्दसा इत्यादिमन्त्रेण । ३९।३।३-४.

आरोहणं आसन्द्या यज्ञाङ्गराजाभिषेके । यजमानः अग्ने दक्षिणेन जानुना अथ सव्येन. अग्निष्ट्वा गायत्र्या सयुक् इत्यादिना । ३७।२।३-८.

आर्त्विज्यं त्रिविधं जग्धं गीर्णं वान्तं इति । जग्धं= ऋत्विक् धनलंपटः अनुष्ठानतात्पर्यरहितश्चेत् । गीर्णं= यजमानस्य भयंकरो यदि ऋत्विक् । वान्तं= पातित्यादिना अपवादेन युक्तः ऋत्विक् यत्र । प्रमादकृते तु तस्मिन् प्रायश्चित्तं वामदेव्यसाम्नि । तत्र, कयानश्चित्र इति तृतीया गायत्री सप्तसप्ताक्षरपादा । तत् त्रिभिरक्षरैर्न्यूनं, तत्र प्रतिपादान्ते ' पु, रु, षः ' इत्यक्षराणि यथासख्य उपधयेत्, अभीषुणः सखीना पु, अविता जरितॄणा रु, शतं भवा स्यूतिभिः षः इति । नित्यप्रयोगेऽपि इद कुर्यात् ' अपि यदि ( यद्यपि ) समृद्धा इव ऋत्विजः स्युः ' । १५।१।१-७.

आर्त्विज्याधिकारी द्वादशाहे दक्षिणाप्रतिग्रहसमर्थः तपस्वी विद्वांश्च । १९।३।१.

आर्त्विज्याय आह्वानं स्वीकर्तव्यमेव, ' यद्यसा वा एषोऽभ्येति य आर्त्विज्येन, त यः प्रतिरुन्धेत् यशः ■ प्रतिरुन्धेत्, यदि तु अयाज्यः स्यमपोदितम् ' । ३०।८।४.

आर्भवं तृचं गायत्रं वैश्वदेवशस्त्रे छन्दोमप्रथमेऽहनि अयं देवाय जन्मने ।२३।२।९,१२। छन्दोमद्वितीयेऽहनि पुनाना पितरः पुनः । २३।४।११ । छन्दोमतृतीयेऽहनि इन्द्र इषे ददातु नः ।१। ते नो रत्नानि धत्तन ।२-३। २४।२।१२.

आर्भवं निविद्धानं सूक्तं वैश्वदेवशस्त्रे अग्निष्टोमे तृतीयसवने तक्षन् रथं सुवृतम् । प्रयोगे. ।

आर्भवं सूक्तं वैश्वदेवशस्त्रे पृष्ठ्ये षडहे । प्रथमेऽहनि इहेह वो मनसा । २०।२।६, । द्वितीयेऽहनि तक्षन् रथं सुवृतं।२०।३।५। तृतीयेऽहनि अनश्वो जातो ।२१।२।१०। चतुर्थेऽहनि प्र ऋभुभ्यो दूतमिव ।२१।५।१। पञ्चमेऽहनि ऋभुर्विभ्वा वाज इन्द्रो ।२२।२।१। षष्ठेऽहनि चतुर्दशर्चे किमु श्रेष्ठः किं यविष्ठ इत्येकं चतुऋचं, उप नो वाजा अध्वर इति द्वितीयम् । २२।८।११.

आर्भवपवमानस्य स्तोत्रियः स्वादिष्ठया मदिष्ठया । १२।३।३.

आर्भवसूक्तस्य तक्षन् रथं सुवृत इत्यस्य वैश्वदेवशस्त्रगतस्य आदौ सुरूपकृत्नुमूतये इति धाय्या । अन्ते च येभ्यो माता, एवा पित्रे, इति द्वे शस्त्वा अयं वेनश्चोदयत् इति धाय्या । १३।६।१-४.

आलम्भनविधिः अग्नीषोमीयपशोः । ६।३।१.

आवापिकं सूक्तं स्तोमविवृद्धौ चतुर्विंशादिरतोमेषु । मैत्रावरुणस्य को अद्य नर्यो इति सूक्तं, ब्राह्मणाच्छंसिनः वने न वायो न्यधायि, अच्छावाकस्य आ याह्यर्वाङ् । २९।३।१०-११

आवापिका ऋचः उत्तरस्यहे पृष्ठ्यषडहस्य अभ्यूढ्यायाः । चतुर्थेऽहनि न ते गिरो अपि मृष्ये इति चतस्रः प्र यो महे महि वृधे इति तिस्रश्च इति सप्त विर जः । तत्र प्रथमास्तिस्रः मैत्रावरुणस्य, तृतीयाचतुर्थीपञ्चम्यः ब्राह्मणाच्छंसिनः,पञ्चमीषष्ठीसप्तम्यः अच्छावाकस्य। वैमदीत्यवपेरन् इति पक्षान्तरं, तत्र यजामह इन्द्र इत्याद्याः विमदेन ऋषिणा दृष्टः सप्त। तत्र ।१।२।३।मैत्रावरुणस्य,।३।४।५। ब्राह्मणाच्छंसिनः, । ५।६।७ । अच्छावाकस्य पङ्क्तीः पञ्चमेऽहनि यश्छन्दि अस्य सोमपा इति सप्त । तत्र १।२।३ मैत्रावरुणस्य, ३।४।५ ब्राह्मणाच्छंसिनः, ५।६।७। अच्छावाकस्य। पारुच्छेपीः षष्ठेऽहनि इन्द्राय हि द्यौः इत्यादय. सप्त ऋचः, तत्र १।२।३ मैत्रावरुणस्य, ३।४।५ ब्राह्मणाच्छंसिनः, ५।६।७ अच्छावाकस्य । अथ चावापः संपातोत्तरं अहरहःशस्येभ्यश्च पूर्वम् । २९।३।८-९.

आशिर-आज्य-पशुविधिः ।१३।३।२-३.

आशीर्मन्त्रपाठः प्रपदहोमोत्तरं यज्ञाङ्गराजाभिषेके 'इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो वीरस्त्राता निषीदतु ।।' इति। ३७।७।५-६.

आशीर्वादमन्त्रः स्वस्त्ययनं नाम । स च 'प्र, स्व' इत्येव । १३।२।१.

आश्रमचतुष्टयं शब्दान्तरैरुक्तं मलं (२), आजिनं ( १ ), श्मश्रूणि ( ३ ), तपः ( ४ ) इति । ३३।१।७.

आश्वत्थानि फलानि चमसे पात्र्यां वा समोप्यानि ऐन्द्रमहाभिषेके संभारः ।३९।३।१-४, ।३९।३।१.

आश्विनग्रहशेषभक्षमन्त्रः होतुः 'एष वसुः संयद्वसुरिह वसुः संयद्वसुर्मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहि' इति । सर्वतः परिहारमाश्विनं भक्षयति ( स्वशिरः, श्रोत्रसामीप्येन पात्रस्य प्रदक्षिणीकृत्य ) । ९।३।७-८.

आश्विनशस्त्रं अतिरात्रे । १७।१-५ । घृतं प्राश्य शंसेत् । १७।१।२ । आहावः शकुनिरिव उत्पतिष्यन् आह्वयीत । ३ । प्रतिपत् आग्नेयी अग्निर्होता गृहपतिः स राजा । ४ ९ । अग्निं मन्ये पितर इति के चित् तत्र । आग्नेयं उषस्य ऐन्द्र आश्विनं इति ।१७।२।१-७। सर्वाणि सप्तछन्दो युक्तानि । सौर्याणि च सप्तच्छन्दांसि इति के चित् तत्र, किंतु त्रीण्येव शंसेत् । सूर्यो नो दिवस्पातु, उदुत्यं जातवेदस इति द्वे गायत्रे, चित्रं देवानामुदगात् इति त्रैष्टुभं, नमो मित्रस्य वरुणस्य चक्षसे इति जागतं इति । १७।३।५-१२ । ऐन्द्रः प्रगाथः इन्द्र क्रतुं न आभर, प्रगाथः रथंतरयोनिः अभित्वा शूर, प्रगाथः मैत्रावरुणः बहवः सूरचक्षसः, ऋचौ द्यावापृथिवीये मही द्यौः पृथिवी इति गायत्री, ते हि द्यावापृथिवी इति जागती, द्विपदा विश्वस्य देवीमृचयस्य ।१४।४।१-१८। परिधानीया ब्राह्मणस्पत्या बृहस्पते अति यदर्यः, प्रजाकामस्य पशुकामस्य च एवा पित्रे विश्वदेवाय इति, तेजस्कामस्य ब्रह्मवर्चसकामस्य च बृहस्पते अति यदर्यः इति । याज्ये द्वे उभा पिबतमश्विना इति गायत्री, अश्विना वायुना इति त्रिष्टुप् । किं वा उभा पिबत गायत्री, प्र वामन्धांसि मद्या इति विराट् । १७।५।१-२०.

आश्विनी इष्टि: कपालनाशे ( हरवल्याश ) प्रायश्चित्तम् । अश्विभ्या द्विकपाल निर्वपेत्, अश्विनावर्तिरस्म अगोमता नासत्या इति याज्यानुवाक्ये । आहुति वा आहवनीये जुहुयात् अश्विभ्यां स्वाहा इति । ३२।८।२.

आसन्दी औदुम्बरी प्रादेशमात्रपादा अरत्निमात्रशीर्षण्यानूच्या ( अरत्निमात्र आडव्या पत्या मंसविरेली ) मौञ्जविधाना व्याघ्रचर्मास्तरणा । यज्ञाङ्गे राजाभिषेके संभरेषु दक्षिणाया स्फ्यवर्तन्यां प्रतिष्ठापयति,अन्तर्वेदि द्वौ पादौ बहिर्वेदि द्वौ । २७।१।३-४। अभिमन्त्रणं तस्याः।३७।२।२ ३ । तत्र आरोहण राज्ञ । ४-८ । अवरोहणं ततः। ३७।५।१-४ । ऐन्द्रमहाभिषेकेऽपि इयमासन्दी उक्तविधा, तस्या अभिमन्त्रणं, तस्या राजानं आरोहयेत् । ३९।३।१-४.

आसन्दीं औदुम्बरीं उद्गाता अधिरोहति महाव्रते। ऐआ. १।८।१०-१२, ५।४।१६.

आसन्दीमारोहयेत् राजानं ऐन्द्रमहाभिषेके, वसवस्त्वा गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्नाऽऽरोहन्तु, इत्यादिना मन्त्रेण । ३९।२।१-४.

आसन्द्या अभिमन्त्रण ऐन्द्रमहाभिषेके, बृहच्च रथंतरं च पूर्वौ पादौ भवता, वैरूप च वैराज चापरौ शाक्वररैवते शीर्षण्ये इत्यादिना । ३९।२।१-२.

आसन्द्या अभिमन्त्रणं क्षत्रिय यज्ञे महाभिषेके, अग्निष्ट्वा गायत्र्या सयुक् छन्दसाऽऽरोहतु सवितोष्णिहा इत्यादि । ३७।२।३.

आसन्द्याः प्रतिष्ठापनं यज्ञाङ्गे अभिषेके दक्षिणाया स्फ्यवर्तन्या अन्तर्वेदि द्वौ पादौ बहिर्वेदि द्वौ । ३७।१।४

आसन्द्यामारोहण यज्ञाङ्गे अभिषेके क्षत्रियस्य अग्निष्ट्वा गायत्र्या सयुक् इत्यादिनेव मन्त्रेण । ३७।२।३-८.

आसन्द्यामासीन गमान राजकर्तारः अभ्युत्क्रोशन्ति ऐन्द्रमहाभिषेके, इमं जना अभ्युत्क्रोशत सम्राज साम्राज्य इत्यादि । ३९।३।५-६.

आसन्द्यामासीनस्य राज्ञोऽभिषेकः यज्ञाङ्गः, पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् पुरोहित ` औदुम्बर्या आर्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेण अन्तर्धाय अभिषिञ्चति, इमा आपः शिवतमा इत्येतेन तृचेन, देवस्यत्वेति च यजुषा, भूर्भुव. स्वरित्येनाभिश्च व्याहृतिभि: । ३९।४।२.

आहनस्या: नाम मन्त्राः दश ब्राह्मणाच्छंसिशिल्पे षष्ठेऽहनि । तासु न्यूङ्खः । ताश्च यदस्या अंहुभेद्या. इत्यादयः ( ऋक्संहितापरिशिष्टे पठिताः ) । ३०।१०।४-७.

आहवनीयोपस्थानं क्षत्रिययागे । पुरस्ताद्दीक्षाया आहुतिं हुत्वा आहवनीयमुपतिष्ठते नेन्द्राद्देवताया एमि न त्रिष्टुभश्छन्दसो न पञ्चदशात् स्तोमात् इत्यादिना । ३४।५।१-४ । अनुबन्ध्यायाः समिष्टयजुषामुपरिष्टात् हुत्वा आहुतिं आहवनीयमुपतिष्ठेत नाग्नेर्देवताया एमि न गायत्र्याश्छन्दसो न त्रिवृत स्तोमात् इत्यादिना । ३४।६।१-४.

आहाव ' अध्वर्यो ' इति । अयं द्वादशाहस्य दशमेऽहनि मानसग्रहे चतुर्होतृपाठरूपशस्त्रस्य । २४।६।१.

आहाव आग्निमारुतशस्त्र तासु तिसृषु विन्यासु ऋक्षु प्रत्यृचम् । १३।१३।१९.

आहाव निविद् सूक्त चेति लक्षणा विधिः । १०।१।१

आहाव निष्केवल्ये शस्त्रे महाव्रते त्रिः। शस्त्रादौ ' अध्वर्यो शोंऽऽऽसावोम् इति, निविद' परिधानीयायाश्चादौ ' शोंऽऽऽसावाऽऽऽम् ' इति । ऐआ. ५।५।१०

आहाव प्रात सवने 'शोंऽऽऽसावोऽऽऽम्,' माध्यंदिने 'अध्वर्यो' शोंऽऽऽसावोऽऽऽम,' तृतीय सवने 'अध्वर्यो' शोशोंऽऽऽसावोऽऽऽम् ' इति । १२।१।१ ४.

आहाव वैश्वदेवशस्त्रे उभयतो धाय्याम् । १३।७।२-३.

आहाव शस्त्रस्य अवयवविशेष. शोंऽऽऽसावोऽऽऽम् इत्यादि. । अयं शस्त्रादौ तन्मध्ये च पठ्यते । आह्वान आहयते आहूय इति शब्देरयमेवोच्यते । १२।१२।४ सायण ।

आहावे आज्यशस्त्रकालीने होता प्राङ्मुखः पराङ्ग गौरिव चतुष्पद्यासीनमध्वर्युं शोंऽऽऽसावोऽऽऽम् इत्याह्वयते। आहावोत्तरमध्वर्युः सम्यक् द्विपाद् भवति। १०।६।४-५.

आहिताग्निना उपवसथे अश्रुकरणे प्रायश्चित्तं। 'अश्रुकरणे' इति शब्दे द्रष्टव्यम्। ३२।७।१.

आहिताग्नेः उपवसथदिने मरणे उत्तरो यागो न कर्तव्य। ३२।१।१.

आहिताग्ने. उपवसथे अव्रत्याचरणे प्रायश्चित्त, 'अव्रत्याचरणे' इति शब्दे द्र. ३२।७।२.

आहिताग्नेः मरणविषये प्रायश्चित्त, उपवसथे, अधिश्रिते अग्निहोत्रे सानाय्ये हविःषु वा, आसन्नेषु हविःषु, प्रवासे, प्रेतारिथविनाशे पर्व्दशः। ३२।१।१-९.

इडा=अन्नम्। ४०।३।७.

इडान्ता आतिथ्या। ३।६।११.

इडोपाह्वान अग्नीषोमीयपशोः, पवित्रा। ६।१०।११.

इडोपाह्वान अग्नीषोमीयपशुपुरोडाशस्य। ६।९।११.

इडोपाह्वान सवनीयपशुपुरोडाशस्य द्विदेवत्यान् भक्षयित्वा इडामुपह्वयते। ९।६।१.

इन्द्रः देवता द्वितीयेऽहनि पृष्ठ्ये षडहे। २०।३।१ ३.

इन्द्रगाथाः कुन्तापसूक्ते पञ्च अर्धर्चशः शंसितव्याः, य इन्द्रो शाशरास मानुष व्यगाहथाः इत्यादय.। ३०।६।२५-२६.

इन्द्रनिहव. प्रगाथः मरुत्वतीये शस्त्रे भवति इन्द्र नेदीय एदिहि इति। १२।४।२, १२।५।१ २, २०।१।८, २०।३।७, २१।१।१३, २१।४।१२, २२।१।९, २२।७।७, २३।१।१२, २४।१।११. ऐआ. १।५।३.

इन्द्रस्य दैवैरभिषेक. पूर्व.। तत्र आसन्दी, मार्ग इत्यन्ता, अभ्युत्क्रोशः अभिमन्त्र.। ३८।१।१-६। अभिषेक, प्राच्या दक्षिणस्या प्रतीच्या उदीच्या ध्रुवाया ऊर्ध्वाया इति दिग्भेदेन दैवैरभिषेकः। ३८।३।१-३

इन्द्रियलुब्धि। ऐआ. २।२१.

इन्द्रायुधः नाम दर्शपूर्णमास विकृतिः, दशकतुः त दध्ना चरन्ति। १४।२।९.

इलान्दं साम महाव्रते अन्ते सामगा गायन्ति यज्ञायज्ञीय वा। इलान्दपक्षेपि एकतृचे तृचद्वये वा गानं इति पक्षद्वयम्। ऐआ. ५।१३।१५.

इष्टानिष्टार्थे वषट्कारप्रयोगाः। ११।७।१-११.

इष्टापूर्तस्यापरिज्यानिः नाम होमः दीक्षायाः पुरस्तात् क्षत्रियस्य यजमानस्य। चतुर्गृहीतमाज्य आहवनीये 'पुनर्न इन्द्रो मघवा' इति ऋक्, तदन्ते च क्षत्रं पुनरिष्ट पूर्तं दात् स्वाहा इति मन्त्रः। अनुबन्ध्यायाः समिष्टयजुषामुपरिष्टात् च 'पुनर्नो अग्निर्जात' इति ऋक्, तदन्ते च क्षत्र पुनरिष्ट पूर्त दात् स्वाहा इति मन्त्रः। ३४।३।१-४

उक्थं शस्त्र द्विविधं पवमानोक्थ एक, यत् पवमानार्थं भवति। महोक्थ द्वितीय, यत् महार्थे भवति। ३६।१।४ सायाण:।

उक्थदोहः नाम मन्त्रसंघः। मूर्धा लोकानामधि० एतास्त उक्थ भूमयः० प्रजापतिः० भूर्भुवःस्व० आयुः प्राण० इत्यादयः अष्टौ महाव्रते निष्केवल्योत्तरं उक्थसंपज्जपः, ततः उक्थदोहजपः होतुः। ऐआ. ५।१३।१-५.

उक्थवीर्यं नाम मन्त्रः 'उपशृण्वते त्वा' इति। तस्य स्थाने महाव्रते निष्केवल्योत्तरं उक्थदोहं जपेत्। ऐआ. ५।१२।४.

उक्थवीर्याणि नाम मन्त्रान् होता जपति। सोऽयं महाव्रते निष्केवल्योत्तर द्वितीयो जपः। घोषाय त्वा, श्लोकाय त्वा शृण्वते त्वा, उपशृण्वते त्वा, आश्रुत्यै त्वा, आश्रुताय त्वा इति षड् मन्त्राः षण्णां शस्त्राणामन्ते क्रमेण होता पठनीया भवन्ति। तेऽत्र जप्याः। ऐआ. ५।५।७.

उक्थसंपत् नाम मन्त्रः, होतुर्जपः महाव्रते निष्केवल्योत्तर 'उक्थ वाचीन्द्राय' इत्युक्थसंपत्। ऐआ. ५।१२।३.

उक्थोपासनं प्राणदृष्ट्या। ऐआ. २।४-२०.

उक्थ्यः ज्योतिष्टोमसंस्थाविशेषः। अग्निष्टोमस्य विकृतिरूपम्। तत्र अग्निष्टोमादूर्ध्वं उक्थपर्यायाग्रयाः। तत्र प्रथमे सवनगणे मैत्रावरुणशस्त्रे इन्द्रावरुणा युवमध्व

राय नः इति दशर्चे सूक्तम् । द्वितीये चमसगणे ब्राह्मणाच्छंसिशस्त्रे ऐन्द्राबार्हस्पत्यं उद प्रुतो न वयो रक्षमाणाः इति द्वादशर्चे सूक्तं, अच्छाम इन्द्रं मतयः स्वर्विदं इत्येकादशर्चे सूक्तं च । तृतीये चमसगणे अच्छावाकशस्त्रे सं वां कर्मणा समिषा इत्यष्टर्चे ऐन्द्रावैष्णवं सूक्तम् । पोतुः द्वौ ऋतुयाजौ प्रस्थितयाज्याश्च तिस्रः । नेष्टुः द्वौ ऋतुयाजौ प्रस्थितयाज्याश्च तिस्रः । १५।६।१–६.

उक्थ्यस्य पञ्चदश स्तोत्राणि, पञ्चदश शस्त्राणि । तत्र अग्निष्टोमोत्तरं त्रीणि । १४।३।१.

उक्थ्ये अच्छावाकः परिधानीयायां अन्त्यं चतुरक्षरं अभ्यस्यति ऐरयेथामैरयेथां इति । २८।७।१२.

उक्थ्ये तृतीयासवने आरम्भणीयानि सूक्तानि होत्रकाणां 'आरम्भणीयानि' इति शब्दे द्र० । २८।७।१-४.

उक्थ्ये तृतीयसवने मैत्रावरुणः इन्द्रावरुणा युवं इति ऐन्द्रावरुणं शंसति । तस्य स्तोत्रियानुरूपौ आग्नेयौ पद्युपु० आग्निरगामि० इति । २८।६।९ । ब्राह्मणाच्छंसी ऐन्द्राबार्हस्पत्यं शंसति प्रमंहिष्ठाय इति । तस्य स्तोत्रियानुरूपौ ऐन्द्रौ वयमुत्वा० योन इद इति । २८।६।१० । अच्छावाकः ऐन्द्रावैष्णवं शंसति सुजौतिवी इति । तस्य स्तोत्रियानुरूपौ ऐन्द्रौ अधाहीन्द्र गिर्वणः, इयं त इन्द्र गिर्वणः इति । २८।६।१०

उक्थ्ये त्रिंशत् स्तुतशस्त्राणि भवन्ति । ३६।४।३.

उक्थ्ये ' भूर्भुवः स्वरिन्द्रवन्तः स्तुध्वं ' इति ब्रह्मा स्तोत्रप्रसवमाह । २५।५-६.

उक्थ्ये साकमश्वेन साम्ना उक्थ्यस्तोत्राणि प्रणयेत् प्रमंहिष्ठीयेन साम्ना वा । १५।५।८-१०.

उच्छ्रयणं यूपस्य । होत्रा अनुप्रवचनीया मन्त्रा उक्ता अत्र । अञ्जन्ति त्वा मध्वरे इत्यन्वाह । उच्छ्रयस्व वनस्पते इत्युच्छ्रीयमाणाय, समिद्धस्य श्रयमाणः, ऊर्ध्व ऊषुण, ऊर्ध्वो नः पाह्यंहसो, जातोजायते, युवासुवासा इत्युत्तमया परिदधाति । ता एताः सप्तान्वाह । त्रिः प्रथमामन्वाह त्रिरुत्तमाम् । ६।२।१-३३.

उत्क्रमणं ( उक्या ) यज्ञाद्गराजाभिषेके । आधाय ऽसमिधं त्रीणि पदानि प्राङुदङ् आभ्युत्क्रामति स्तृतिरसि दिशा मयि देवेभ्यः इति राजा । ३७।५।११–१२.

उपस्थानं अपराजिताया दिशः यज्ञाद्गराजाभिषेके उत्क्रमणोत्तरं स्तृतिरसि दिशा मयि इति मन्त्रेण । ३७।५।१३.

उत्तरवेदी नाभिः । अनुवादोऽयं तेन विधिर्गम्यते । उत्तरवेद्यां मध्ये नाभिर्नाम अल्पीयसी वेदिरेव क्रियते । ५।२।२३, ३२.

उत्तरवेद्यां पौतुदारवाः परिधयः अग्निष्टोमे । ५।२।२८.

उत्तरवेद्यां संभाराः स्थाप्यन्ते गुग्गुलु ऊर्णास्तुकाः सुगन्धितेजनानि च अग्निष्टोमे । ५।२।२८.

उदप्लवनं = परिप्लुः परिप्लवा इत्यध्वर्यवो यद् वदन्ति, तत्सामम् । ३५।६।४.

उदयनीया अग्निष्टोमे, प्रायणीयावत् । विशेषस्तु पत्नीसंयाजाः समिष्टयजुश्चास्ति । प्रायणीयायां तु न सन्ति । (सत्याषाढः ९।६।११, गार्ग्यवृत्तिः ६।१४।२) देवताः अग्निः, सोमः, सविता, पथ्या स्वस्तिः, अदितिः इति क्रमेण । देवतानां देशास्तु प्रायणीयोक्ता एव । प्रायणीयानिष्कासे स्थाल्यां वा ( निष्कासयुक्तस्थाल्या इत्याचारः ) उदयनीयानिर्वापः २।५।७-८ । होता समानः, त एव ऋत्विजः ये प्रायणीयायाम् । आश्व ६।१४।५ । प्रयाजा न सन्ति अनुयाजाश्च सन्तीति पूर्वपक्षः, उभयवत्त्वं सिद्धान्तः । २।५।१-४ । संयाज्ये सेदग्निरग्नीरत्यस्त्वन्यान्० सेदग्निर्यो वनुष्यतो० इति विराजौ । २।४।४ ७ । द्रव्य अदित्याश्चरुः, इतरेषा चतुर्गाआज्यम् । आश्व ६।१४।३.

उदयनीयाया पथ्या स्वस्तिः चतुर्थी देवता, प्रायणीयायां ■ प्रथमा । २।५।१५.

उदरं ब्रह्म इति शार्कराक्ष्या उपासते । ऐआ. २।४।५.

उदर्कः=अवसानं=विच्छेदः । पुरस्तादुदर्कं उपरिष्टादुदर्कं समानोदर्कं इति त्रेधा । पूर्वकालीनो विच्छेदः पुरस्तादुदर्के, शंसनादूर्ध्वकालीनो विच्छेदः उपरिष्टादुदर्के, यस्मिन् सूक्ते चरणः चरणार्धो वा पुनःपुनरावृत्तं पठ्यते तत्सूक्तं समानोदर्कम् । २१।२।१७ सायणः

उदवसानीया द्वादशाहसत्रस्य वसन्ते कुर्युः। ३९।४।१२.

उद्दाहिततरः=उन्नततरः। ऐब्रा ५।३।११.

उदितहोम एवाग्निहोत्रे अनुदितहोमस्तु गौणः पक्षः स च शाखान्तरीयः। २५।४।१८, २५।५-६।

उदितहोमप्रशसा। २५।४ ६.

उदुम्बरशाखा अस्पीयसी अभिषेकार्था राजाभिषेके। ३७।४।१७, ३९।१।१

उदुम्बरस्य सृष्टि। ऊर्जो वा एषोऽन्नाद्यात् वनस्पतिरजायत यदुदुम्बर.। भौज्य वा एतद् वनस्पतीनाम्। ३५।६।१.

उदूहामि=परिज्ञातस्वरस्थानविशेषयुक्तं कल्पयामि। ऐब्रा. ५।४।३ सायण।

उद्गाता औदुम्बरीमासन्दीमाधिरुह्यगायति महाव्रते। ऐब्रा. १।८।१०-२, ५।४।१६। शौचाचमनाद्यर्थे गमने प्राप्ते यजमानानुज्ञया गत्वा पुनरागत्य पूर्ववत् समारोहेत्। ऐब्रा. ५।४।१७.

उद्गातारः महाव्रते यज्ञायज्ञीय वा दूलान्द वा साम गायन्ति। दूलान्दगानमपि एकतृचे वा तृचद्वये वा गीयते इति पुनः पक्षद्वयम्। ऐब्रा. ५।१३।१५.

उद्गातारः= छन्दोगाः = सामगाः ( सामगशब्दस्य लोके 'सामक' इति अपभ्रंश. सन्ति: ) षोडशिसाम्नः स्तोत्रियादि नानदसामपक्षे अनिरुक्तत्वेन, गौरिवीतसामपक्षे च निरुक्तत्वेन स्तुवन्ति। १६।२।४ सायण·

उद्गातारः सौम्ये चरौ बहुलघृतावते स्वात्मान पूर्वमवेक्षेरन्, ततो होता इति के चित्। वस्तु, होतैव पूर्वमवेक्षेत। १३।८।६.

उद्गातु. श्येनाकार वक्षः पशुभागः।३१।१।२.

उद्गीथ. उद्गात्रा गातव्यः सामावयवस्तृतीय· पाञ्चभक्तिके, साप्तभक्तिके तु चतुर्थः। १२।१२।४.

उद्धरण आहवनीयस्य साय छायाया समेदात्पुरा रति भानवे क्रियति चित्। ३२।११।२.

उद्धरणाभावे सूर्योदये ऽस्तमन्तर्धाय (उपरिधृत्वा) प्रातरुद्धरेत्। ३२।११।१-२। सूर्यास्तसमये च हिरण्य पुरस्कृत्य गार्हमुद्धरेत्। ३२।११।२.

उद्धरणे अग्नौ अग्ने· प्रायश्चित्तम्। तत्र निधानात् प्राग्ज्ञाने उद्धृत्य पूर्वमग्निं अपर निदध्यात्। यदि प्राङ् नानुपश्येत् अग्नयेऽग्निवते अष्टाकपाल निर्वपेत्। अग्निनाऽग्निः समिध्यते, त्वं ह्यग्ने अग्निना इति याज्यानुवाक्ये। आहुतिं वा आहवनीये जुहुयात् अग्नयेऽग्निवते स्वाहेति। ३२।५।१.

उद्धरणे प्रैषः अग्निहोत्रे-साय प्रातश्च। उद्धराहवनीयं इत्यपराह्णे आह; उद्धराहवनीयं इति प्रातः (उषसि)। २५।१।१-४

उद्यती नाम निवृत्तस्तेमस्य विष्टुतिः। उपास्मै, दविद्युतत्या, पवमानस्य ते इति त्रिषु तृचेषु प्रथमप्रथमा ऋचः प्रथमे पर्याये, द्वितीयाद्वितीया ऋच द्वितीये, अन्तिमाअन्तिमाश्च ऋचः तृतीये पर्याये इति। १४।४।१ सायणः।

उन्नयन नाम अग्निहोत्रहवण्यादौ स्रुवादिना सेचनम्। ३२।४।१ सायणः

उन्नीयमानयाज्याः सप्त होतारः एकैका पठन्ति। २८।१ ८ सायणः.

उन्नीयमानसूक्तगता आदिमाः सप्त ऋचः उन्नीयमानयागयाज्याना पुरोनुवाक्याः। २८।१।८.

उन्नीयमानसूक्तानि प्रात सवने आसत्या यहन्तु इरयः, इन्द्र गायत्री.। २८।१।१-४। सर्वे सूक्तमन्वाह। आदिमाः सप्तैवान्वाह इति के चित् तत्र। माध्यदिने अस्याविदेव गोऽऋजीक, इन्द्रः त्रिष्टुप् यसिष्ठ· सर्वं सूक्तमन्वाह। आदिमाः सप्तैवेति के चित् तन्न।२८।३।१-४। तृतीयसवने इहेपयात प्रयसो, वामदेवो गौतमः ऋभवः त्रिष्टुप्। २८।४।१, ४-५

उन्नेतु. श्रियः कीकसा· अर्धं च वैकर्तस्य पशुभाग.। ३१।१।२

उपगातॄणा सव्य पार्श्व पशुभागः। ३१।१।२.

उपप्रैषः मैत्रावरुणस्य होतार प्रति अभिगो। ६।५।६.

उपवसथदिने आहिताग्नेर्मरणे उत्तरो यागो न कर्तव्य। ३२।१।१

उपवसथनिर्णय· दर्शपूर्णमासयो.। पूर्वां पौर्णमासीमुपवसेत् इति पैङ्ग्य उत्तरामिति कौषीतकम्। एव मम वास्यामपि। ३२।९।१-५.

उपवसथे अमत्याचरणे ( दिवास्वापादि ) आहिताग्नेः प्रायश्चित्तम् । 'अमत्याचरणे' इति शब्दे द्र० । ३२।७।२.

उपवसथे अश्रुकरणे आहिताग्नेः प्रायश्चित्त, 'अश्रुकरणे' इत्यत्र द्र० । ३२।७।१.

उपवासः ( रात्रौ ) यागप्राग्दिने मतार्थे कर्तव्यः । ३२।१।१.

उपविशति विरवे पुरोहितः या ओषधीः सोम राज्ञी विष्ठिताः पृथिवीमनु इति, 'वरुणप्रयोगे । ४०।४.

उपविशेत् चेत् अग्निहोत्री धेनुः दोहकाले, तदा प्रायश्चित्तं 'अग्निहोत्रदोहकाले' इति शब्दे द्र० । २५।२।१-५, ३२।२।१-२.

उपशान्तिप्रायश्चित्तं ( विशीर्णे ), 'नाशप्रायश्चित्त गार्हपत्ये' इत्यत्र द्र० । ३२।४।८.

उपशान्तौ, 'अग्निना प्रयाणामपि' इति शब्दे द्र. प्रायश्चित्तम् । ३२।७।२.

उपसत्प्रशंसा । ४।७।१-३ ४।८।११.

उपसत्सु तिस्रः सामिधेन्यः तिस्रो देवताः । १५।१।४.

उपसदः अग्निष्टोमे । ४।६-९ । आख्यायिका ४।६।१-७,कालः ।४।६।७। बर्हिः ।४।८।१। देवता ।४।८।२। द्रव्यं ।४।८।३। मत ।४।८।४-६। सामिधेन्यः ।४।८।७। याज्यानुवाक्या। ।४।८।८-१४। प्रयाजानुयाजनिषेधः ।४।९।१। सकृदतिक्रम्य आश्रावणं ।४।९।२। तत्तत्र शब्दे विवरण द्र० ।

उपसदः विस्त. अग्निष्टोमे । द्वादश द्वादशाहे । १०।२।३.

उपसदन्तासु इष्टिषु मन्द्रः स्वरः अग्निष्टोमे । १५।१।६.

उपस्थानं अग्नेः, प्रवासे प्राप्ते, प्रवासादेत्य, अररक्षः। तूष्णीमेव अग्न्यादि विनयप्रदर्शनरूप, निवा 'अभयं नोऽमयं मेऽस्तु' इति पठेत् । ३२।१।१।८.

उपस्थानं = 'आदित्योपस्थान' ( इत्यत्र द्रष्टव्य ) महाव्रते माध्यंदिने होतुः । ऐआ. ५।१।४६.

उपस्थानं = आग्नीध्रीयोपस्थानं ( इत्यत्र द्र० ) क्षत्रियथागे । ३४।५-६.

उपस्थानं 'चित्याग्नेः' ( इत्यत्र द्र० ) महाव्रते माध्यंदिने, होता । ऐआ. ५।२।२-६.

उपांशुग्रहं होमादूर्ध्वं होता 'प्राणं यच्छ स्वाहा सुहव सूर्याय इति अभिमन्त्रयेत । तं अभिप्राणेत् 'प्राण प्राणं मे यच्छ' इति, अग्निष्टोमे ८।३।३.

उपांशुग्रहहोमपर्यन्त अपोनप्त्रीयानुवचनमारभ्य होतुर्वाङ्नियमः । ८।३।१-२.

उपांशुत्व नाम 'करणवत् अशब्द अमनःप्रयोगं उपांशु' इति प्रातिशाख्यम् । करणवत्=ओष्ठव्यापारयुक्तम् । अमनःप्रयोग=न तु मनःप्रयोगव्यापारमात्रम् । अशब्दं=परैः श्रवणायोग्यम् । ऐआ ५।१।३ सायणः ।

उपांशु पात्नीवतग्रहस्य याज्यामाह अग्नीध्रः । २६।३।८.

उपांशुसवनग्रावाणं 'व्यानाय त्वा' इत्यभिमृश्य वाचं विसृजते होता अग्निष्टोमे प्रातःसवने । ८।१।३.

उपावहरणं सोमस्य अग्निष्टोमे । सोमं क्रीत्वा प्राचीनवंशे नयनम् । तत्र होता सोमोपावहरणीयाः अष्टौ ऋचः अन्वाह । तत्रादौ 'सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि' इत्याहाध्वर्युः । अथ होता भद्रादभिश्रेयः प्रेहि इत्येका, सोमे यास्ते मयोभुव इति तृच सौम्य गायन, सर्वे नन्दन्ति यशसा इत्येका, आगन्देव ऋतुभिर्वर्धतु इत्येका, याते धामानि हविषा इति सप्तमी, इमा धिय शिक्षमाणस्य देवेति वारुण्या परिदधाति ।. तासां त्रिः प्रथमामन्वाह त्रिरुत्तमाम् । ३ । १-३.

उभममन्तरेण पाठः नाम क्रमपाठः । संहितापदक्रमाः । ऐआ. ३।२-६.

उष्ट्रः अमेध्यः अभक्ष्यः । ६।८।६.

उष्ट्रस्य सृष्टिः प्रजापतेः रेतसः प्रदीप्तस्य भस्मनः सकाशात् । १३ । १० । २.

उष्णिक्कत्वं संपादनीय 'गायत्रीषु' इति शब्दे द्र० महाव्रते निष्केवल्ये औष्णिहतृचाशीतौ । ऐआ. ५ । ११ । २ सायणः ।

ऊतयः नाम इष्टयश्च आहुतयश्च । १ । २ ।४.

ऊरुः ऊर्ध्वभागः, सक्थि च अधोभागः इति भेदः

३१।१।२ सायणः.

उरू महाव्रते निष्केवल्यस्य । इन्द्राग्नी युवं सु नः इति सूक्तम् । तत्र द्वितीया सप्तपदा, द्वादशी त्रिष्टुप्, इतराः षट्पदाः । तत्र द्वितीया ऋचं आदिमपादत्रयेण गायत्री कुर्यात्, उत्तरैश्चतुर्भिः पादैः अनुष्टुभं कुर्यात् । द्वादशीं त्रिष्टुभं पञ्चः शंसेत् । इतरास्तु दश गायत्रीकारं शंसेत् । निविद्धानं सूक्तं प्रयोमहे मन्दमाना, निविदश्च (३।१-२०) इन्द्रो देवः सोमं पिबतु इत्यादयः । सूक्तं यनेन वायो इत्यर्चे, यो जात एव इति पञ्चदशर्चे, त्यमु षु वाजिनं तृच, इन्द्रो विश्व विराजति इत्येकपदा द्यासान्तरस्था, इन्द्रं विश्वा अवीवृध इत्यष्टर्चे आनुष्टुभ, तत्र आद्यन्तयोरर्धर्चयोः यथाम्नातपाठेन शंसन, मध्यमाना तु चतुर्दशानामर्धर्चाना व्यतिषङ्गेण शंसन, यथा प्रथमः अर्धर्चः यथाम्नातः शंस्तव्यः, तृतीयपादस्य संयोजन द्वितीयस्या ऋचः प्रथमपादेन इत्येकानुष्टुप् संपन्ना । ततः प्रथमायाश्चतुर्थं पाद द्वितीयस्याः द्वितीयपादेन संयोज्य प्रथमार्धर्चं कुर्यात्, ततो द्वितीयस्यास्तृतीय पाद तृतीयस्याः प्रथमपादेन संयोज्य द्वितीयमर्धर्चं कुर्यात्, सेयं द्वितीया अनुष्टुप् । एवमुत्तरत्रापि एकैकपादान्तरितत्वेन द्वौ द्वौ पादौ संयोज्य अर्धर्चान् कृत्वा तादृशाभ्यामर्धर्चाभ्या एकैका अनुष्टुप् संपादनीया । उत्तमः अर्धर्चस्तु यथाम्नात एव शंस्तव्यः इति । पिबा सोममिन्द्र मन्दतु त्वा इति पद, योनिष्ट इन्द्र सदने इति षड्ऋच, तत्र आदिमाश्चतस्रः शस्त्वा षष्ठीं शंसेत् । पञ्चम्या परिदधाति तया निष्केवल्यस्य परिसमाप्तिः । ऐआ १।२०-२१, ५।१२।१-२.

ऊर्णास्तुकाः नाम अवि-(मेंढा) संबन्धिनःशीर्षस्था रोमाः । ५।२।२८ सायणः ।

ऊवध्यगोहं=पशोः पुरीषस्यापनार्थं अवटं खनति यत्रौ । ७।१।८-९.

ऋक्तो यज्ञप्रेषप्रायश्चित्त भूःस्वाहा इति गार्हपत्ये जुहुयात् । २५।७।५.

ऋक्शः व्यतिमर्शविहरण वालखिल्याना । १ सूक्ते १ ऋक्+२ सूक्ते१ ऋक्,१ २।१+१।२ इति रीत्या सर्वत्र । २९।८।९ सायणः

ऋग्मः नाम ऋचं मिनोति मिमाति मीनाति वा । ऋचा युक्त इत्यर्थः । ऋक्शिरस्कः प्रैषमन्त्रः इति प्रकरणबलात्सिद्धो यौगिकार्थः । २२।४।६.

ऋग्वेदस्य मण्डलर्षयः प्राण एवेति उपासना । ते च शतर्चिनः माध्यमाः गृत्समदः विश्वामित्रः वामदेवः अत्रयः भरद्वाजः वसिष्ठः प्रगाथाः पावमान्यः क्षुद्रसूक्ताः महासूक्ताः इति । ऐआ. २।९-१०.

ऋग्वेदस्य होत्रत्वं समाख्यावलात् मीमांसाया विचारितम् । ऐआउपक्रमे सायणः ।

ऋचा शौनःशेपाख्यानगतानां प्रतिगरः 'ओम्' इति । ३३।६।१२-१३.

ऋतुग्रहयागविधिः 'ऋतुयाजैश्चरन्ति' । ९।५।१.

ऋतुग्रहाः द्वादश । तत्र मैत्रावरुणेन प्रेषिताः होता पोता नेष्टा अग्नीत् ब्राह्मणाच्छंसी प्रशास्ता अच्छावाकः अध्वर्यू गृहपतिश्च इत्येते षड्ग्रहेषु 'ऋतुना सोम' इति याज्याया पठन्ति, सप्तमादिदशमान्तेषु चतुर्षु ग्रहेषु 'ऋतुभि सोम' इति, एकादशद्वादशयोस्तु 'ऋतुना सोम' इति पठन्ति । ऋतुयाजाना नानुवषट् कुर्यात् । ९।५।२-७.

ऋतुयाजेषु अग्निष्टोमे मैत्रावरुणः प्रैषमन्त्रं पठित्वा होतर्यज इति प्रेष्यति । होत्रादयश्च याज्या प्रैषक्रमेण पठित्वा तदन्ते वषट्कुर्वन्ति । षडहे षष्ठेऽहनि तु ऋग्मेभ्योऽपि उभयं कुर्वन्ति । २२।४।६ सायणः ।

ऋतुयाजेषु मैत्रावरुणेन प्रैषमन्त्रमुच्चार्य ऋच पठित्वा प्रैषः कर्तव्यः, होत्रादिभिरपि प्रैषमन्त्र पठित्वा ऋचमुच्चार्य वषट्कारः कर्तव्यः ' तस्मात् ऋग्मेभ्य एवाधि प्रेषितव्यं ऋग्मेभ्योऽधि वषट्कृत्यं " इदं सर्वं षडहे षष्ठेऽहनि ।२२।४।१ ६.

ऋतुयाजौ द्वौ द्वौ पोतुर्नेष्टुश्च भवतः उक्थ्ये क्रतौ । अग्निष्टोमेऽप्येवम् । होतुरपि द्वावेव ऋतुयाजौ । तत्र प्रथमः सप्तमश्च होतुः, द्वितीयोऽष्टमश्च पोतुः, तृतीयो नवमश्च नेष्टुः इति । १५।६।६.

- ऋतुयाज्या द्वादश क्रमेण होता पोता नेष्टा अग्नीत् ब्राह्मणाच्छंसी प्रशस्ता होता पोता नेष्टा अच्छावाकः अध्वर्यू ( अध्वर्युः प्रतिप्रस्थात्रा सह ) गृहपतिश्च पठन्ति

अग्निष्टोमे ।२४।४।२.

ऋतुयाज्यापठनार्थे मैत्रावरुणः होत्रादीन् प्रेष्यति अग्निष्टोमे । २४।४।२ सायणः ]

ऋश्यस्य पशोः सृष्टिः प्रजापतेः रेतसः प्रदीप्तस्य भस्मनः सकाशात् । १३।१०।२.

ऋत्यः अश्वमेधकर्तॄणां पुरोहिताः 'ऐन्द्रमहाभिषेकफलोदाहरणानि' इत्यत्र द्र० ।

एकधनासु अप्सु आवर्तनं प्रतिदर्शनं इत्यादिक्रियायुक्तासु सतीषु होता अपोनप्त्रीया ऋचः आवर्तृतीरधनु इत्यादीरन्वाह 'अपोनप्त्रीयं सूक्तं' इत्यत्र द्र० । ८।२।१-२७.

एकपदाः षष्ठेऽहनि वालखिल्यानां प्रगाथेप्रगाथे एकैका अन्तेअन्ते प्रक्षेपणीयाः । ताश्च पञ्च । इन्द्रो विश्वस्य गोपतिः, इन्द्रो विश्वस्य भूपतिः, इन्द्रो विश्वस्य चेतति, इन्द्रो विश्वस्य राजति, इन्द्रो विश्वं विराजति इति । तत्र चतस्रः शाखान्तरे दशमेऽहनि पठिताः । पञ्चमी तु शाखान्तरे महाव्रते पठिता । तास्ततः अत्रानेतव्याः । २९।८।४-६ सायणः ।

एकविंशस्तोमः चतुर्थेऽहनि पृष्ठ्ये षडहे । २१।४।१-२.

एकविंशस्तोमस्य विष्टुतिः । १४।४।१-२ सायणः ।

एकाहेषु अथर्वस्तोमेषु अथर्वपृष्ठेषु ऐकाहिका एव होत्रकाः । ३६।४।१.

एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते, एतमग्नावध्वर्यवः, एतं महाव्रते छन्दोगाः । ऐआ. ३।९।११.

एवयामरुत सूक्तं वैश्वदेवशस्त्रे षष्ठेऽहनि पृष्ठ्ये षडहे, प्रवोमहे मतयो यन्तु । सद्‌चरसूक्तमिदम् । २२।१०। १-४.

एवयामरुते अच्छावाकशिल्पे षष्ठेऽहनि न्यूङ्खः प्रवो-महे इत्यत्र । ३०।४।१-२.

ऐकाहिका- परिधानीयाः । मैत्रावरुणस्य प्रातःसवने, ते स्याम देव वरुण, माध्यंदिने नू ष्टुत इन्द्र नू गृणान, तृतीयसवने इयमिन्द्रं वरुणमष्टमे, ब्राह्मणाच्छंसिनः प्रातःसवने स न इन्द्रः शिवःसखा, माध्यंदिने एवेदिन्द्र वृषण, तृतीयसवने बृहस्पतिर्नः परि पातु । अच्छावाकस्य प्रातःसवने गोमद्धिरण्यवत्, माध्यंदिने शुनं हुवेम मघवान, तृतीयसवने उभा जिग्यथुर्न परा । २७।५।१-५ सायणः ।

ऐतरेयं ब्राह्मणमारण्यकं च कस्य चिद् बहुपत्नीकस्य इतरायाः नामवत्याः पुत्रेण महिदासेन भूदेवताया अनुग्रहात् लब्धं, इति ऐतरेयकं इत्युच्यते । उपक्रमे सायणः ।

ऐतशप्रलापो नाम सप्ततिसंख्याकपदसमूहः । अयमेव अग्नेरायुः नाम अयातयामः नाम मन्त्रकाण्डम् । तत्र षष्ठेऽहनि ब्राह्मणाच्छंसिशिल्पे कुन्तापोत्तरं पदावग्राहं निविद्वत् शस्यते । उत्तमेन पदेन प्रणौति ( अन्ते पदे प्रणवः ) । एता अश्वा आप्लवन्ते, प्रतीपं प्रतिसत्वनं, इत्यादिः । ऋग्वेदखिले । तत्र अष्टादशपदान्येव शंस्तव्यानि इति के चित् । तं हैके भूयांसं शंसन्ति सर्वाण्येव । स न निषेधेत् यावत्कामं शंस इत्येव ब्रूयात् । ३०।७। १-१५.

ऐन्द्रः महाभिषेकः पुरुषार्थः । तत्र शपथदानं पुरोहितेन ।३९।१।१-२। शपथग्रहणं क्षत्रियेण ।३। संभाराः। ३९।२।१-४, ३।१। चमसे पात्र्यां वा बानस्पत्यान् औषधांश्च संभारान् समोप्य दध्यादि अभ्यानयेत् । ततः चमसादिः भूमौ प्रतिष्ठापनीयः । ३९।३।१ अभिमन्त्रणं आसन्द्याः । १-२। आरोपणं क्षत्रियस्य आसन्द्या ।३-४। अभ्युत्क्रोशनः।५ । अभिमन्त्रणं ।६,३९।४।१। अभिषेकः। २।अभिमन्त्रणं। ३९।५।१-२। दक्षिणादान ।३९।६।२। सुराकंसं क्षत्रियहस्ते आदधाति ।३। सुरापानं क्षत्रियेण । ४-७ । अभिमन्त्रणं । ६-७, अभिषेकप्रशंसा । ३९।७।९। ( एतेषां क्रियाणां विवरणं तत्रतत्र शब्दे द्रष्टव्यम् )।

ऐन्द्रमहाभिषेकः क्षत्रिययज्ञाङ्गः । उदवसानीयाया संस्थितायां अभिषिञ्चन्ति ।३७।१।२। संभाराः। ३। आसन्द्याः प्रतिष्ठापनं ।४। व्याघ्रचर्मास्तरणं ।३७। २।१। अभिमन्त्रणं आसन्द्याः ।२-३। आरोहणं आसन्द्यां । ३-८। अपांशान्तिमन्त्रवाचनं ।९-११। अभिषेकः।३७। ३।१-९ । होमः आभिषेकाङ्गम् । १०। प्रशंसा ।३७। ४।१-७। सुराकंसं क्षत्रियहस्ते आदधाति पुरोहितः

८-९। शान्तिवाचनं ।१० १२। सुरापान, सुराशेषदानं निवाय ।१३-१४। अवरोहः ।३७।५।१-२। प्रत्यवरोहमन्त्रः ।३-४। नमस्कारो ब्रह्मणे । ५ ६ । वरदान ।७। समिदाधानं आहवनीये ।८-१०। अभ्युत्क्रमणं ।११ १२। दिशुपस्थान ।१३, ३७।६।१। अमित्राणां व्यपनुत्तिः। टी प्रपदहोमः।९, ३७।७।१-४। आशीर्वादमन्त्रपाठः। ५-७। ऋत्विजा अभिषेकपरिज्ञानाभावे निन्दा ।८। प्रशंसा ।९-१०। ('अभिषेकः उदवसानीयोत्तरं' इति शब्देपि द्रष्टव्यम्।तत्तत्पदार्थविवरण तु तत्तच्छब्दे द्रष्टव्यम्)

ऐन्द्रमहाभिषेकफलोदाहरणानि अमुना पुरोहितेन अमुष्य राज्ञोऽभिषेकः कृतः, तेन स राजा समन्तं पृथिवीं जयन् परीयाय अश्वेन च मेध्येन ईजे, इ.

| पुरोहिताः | राजानः |
|---|---|
| तुरः कावषेयः | जनमेजयः परिक्षितः ३९।७।१-३ |
| च्यवनः भार्गवः | शार्यातः मानवः ४ |
| सोमशुष्मा वाजरत्नायनः | शतानीक. सात्राजितः ५ |
| पर्वत।रदौ | आम्बाष्ठ्यः ६ |
| ,, | युधाश्रौष्टि. औग्रसैन्यः ७ |
| कश्यपः | विश्वकर्मा भौवनः ८-१० |
| वसिष्ठ. | सुदा. पैजवनः ११ |
| संवर्तः आङ्गिरसः | मरुत्त आविक्षितः १२ १४ |
| उदमयः आत्रेयः | अङ्गः वैरोचन. ३९।८।१-८ |
| दीर्घतमा मामतेयः | भरतः दौष्यन्तिः ३९।९।१-७ |

ऐन्द्रमहाभिषेकविद्याप्राप्तिफलोदाहरणानि । बृहदुक्थ. आचार्यः दुर्मुखाय पाञ्चालाय प्रोवाच । ९।९।८ । विद्याप्राप्तिफले प्रत्युदाहरण, राजा अभिषिक्तः सन् जिगाय । परस्तात् पुरोहित सोऽपमानयाचक्रे, तेन पराजिग्ये इति । स च राजा अत्यरातिः जानतापि. ३९।१०।९। यज्ञाङ्गाभिषेकविद्यावत उदाहरण जनमेजय पारिक्षितः । अभिषेकान्तक्षत्रियज्ञागोदाहरणमपि जनमेजयः पारिक्षित एव । ऋत्विजा च तादृशविद्याशून्यानां निन्दा । ३७।७।७-१०.

ऐन्द्रमहाभिषेकविद्यावते पुरोहिताय न द्रुह्येत । ३९।९।११

ऐन्द्रमहाभिषेकविद्यावते पुरोहिताय अत्यरातिर्जानतपिर्दुद्रोह । तेन स पराजिग्ये । ३९।१०।९.

ऐन्द्रवायवः ग्रह द्विदेवत्यः इन्द्रतुरीयः । पुरोऽनुवाक्ये द्वे अनुष्टुभौ इति के चित्, गायत्र्यौ सिद्धान्तः । वाय वायवायाहि, ऐन्द्रवायवी इन्द्रवायू इमे सुता उप प्रयोभिरागतम् । याज्ये द्वे, गायत्र्यौ इति के चित् परतु वायवी अग्र पिबा मधुना, ऐन्द्रवायवी शतेनानो अभिष्टिभिः इत्येव गायत्र्यौ इति सिद्धान्तः। ९।२।३-६। भक्षमन्त्रः एष वसुः पुरुवसुः-उपहूता वाक् सह प्राणेन० । भक्षणं पुरस्तात् प्रत्यञ्चम् । ९।३।३-८.

ऐन्द्राग्नं ग्रहं अध्वर्युः इन्द्राग्नी आगतं सुतं इति गृह्णाति । तदर्थं अच्छावाकस्य आज्यम् । १०।५।१७.

ऐन्द्राग्रहस्य आज्यशस्त्रस्य याज्या अग्न इन्द्रश्च दाशुषो इति विराट् त्रयस्त्रिंशदक्षरा । १०।५।१२, १७.

ऐशान्या दिशः अपराजितत्वे आख्यायिका । देवासुरयुद्धे अन्यासु दिक्षु देवाना पराजयः, ऐशान्या तु न पराजयः किंतु जय एवेति तस्यास्तात्पर्यम् । ३।३।५ ६.

ओं — गृह्यम् । ४०।३।६.

ओषधी . शतविचक्षणा : = शतशाखाभिन्नाः । ४०।४।५

औदुम्बरः चमसः ऐन्द्रमहाभिषेके पुरुषार्थे । ३९।३।१, यज्ञाङ्गे । ३७।३।१.

औदुम्बरः शाणः शततन्तुः महाव्रते तन्तुवाद्यविशेषः । ऐआ. ५।४।१.

औदुम्बराणि प्रेङ्खस्य काष्ठानि पालाशानि वा महाव्रते माध्यंदिने । ऐआ ५।३।४.

औदुम्बराणि फलानि क्षत्रिय यज्ञे फलचमसार्थम् । ३५।४।२, ३५।६।१.

औदुम्बराणि फलानि चमसे पात्र्यां वा समोप्यानि ऐन्द्रमहाभिषेके । ३९।२।१-२, ३।१

औदुम्बरी आसन्दी ऐन्द्रमहाभिषेके पुरुषार्थे । ३९।३।१ । यज्ञाङ्गे । ३७।१।२.

औदुम्बरीं आसन्दीमधिरोहति उद्गाता महाव्रते । ऐआ. १।८।१०-१२, ५।४।१६.

औदुम्बरीं शाखां समन्वारभन्ते सर्वे ' इषमूर्जमन्वारभामहे ' इति चतुर्होतृमन्त्रव्याख्यानरूपशास्त्रकाले द्वादशाहस्य दशमेऽहनि मानमग्रहे । २४।५।१-५.

औदुम्बरी शाखा अत्यंयष्टी अभिषेकार्थां । ३७।१।२, ३९।३।१.

औदुम्बरेण स्रुवेण होता आग्नीध्रीये तिस्र आज्याहुती र्जुहोति मरुत्वतीये शस्त्रे संस्थिते महाव्रते । 'आज्याहुतीः' इति शब्दे द्र० । ऐआ. ५।१।१०-१३.

औदुम्बर्या आर्द्रया शाखया सपलाशया यजमानमभिषिञ्चति ऐन्द्रमहाभिषेके । ३७।३।१-५, ३९।१।२.

औद्गात्र साम्ना ( सामवेदेन ) क्रियते । २५।७।३-४.

औष्णिहीं तृचाशीतिः अथ सूददोहाः महाव्रते निष्केवल्ये शस्त्रे । य इन्द्र सूक्तं ( १-२३ ), इन्द्रः सुतेषु सूक्तं ( १-२३ ), तमभिप्रगायत सूक्त ( १-१३ ), तत्र अन्त्यामुद्धरेत्, इन्द्राय साम गायत सूक्तं (१-१२), सखाय आशिषामहि सूक्त ( १-३० ), तत्र अन्तिम तृचमुद्धरेत्, य एक इद् विदयते तृच', आयाहीदिभिःसुत तृच , यस्य त्यच्छम्बर मदे तृचः । वक्ष्यमाणासु सर्वासु गायत्रीषु उष्णिक्त्वं संपादनीयम् । यदिन्द्राह यथा त्वं इति सूक्तं गायत्र, स सम्राज चर्षणीना सूक्त गायत्रं तत्र उत्तमामुद्धरेत्, सुरूपकृत्नुमूतये सूक्तं गायत्रं, आ त्वेता नि षीदत इति सूक्तं गायत्रं, सुक्षत्रिं प्रसमस्यं इति सूक्त गायत्रं, एन्द्रसानसिं रयिं इति सूक्तं गायत्र, इन्द्रेहि मत्स्यन्धसः इति सूक्तं गायत्रं, य आनयत्परावतः इति सूक्त गायत्रं अत्र उत्तमास्तिस्र उद्धरेत्, रेवतीर्नः सधमादः इति तृचः गायत्रः । अत्र १३० गायत्र्यः उष्णिक्त्वेन संपादिताः सत्यः ११४ उष्णिहः संपद्यन्ते, स्वतःसिद्धा उष्णिहः १२६, इति औष्णिही तृचाशीतिः ( ८० × ३ = २४० ) संपद्यते । तदन्ते सूददोहाः । ऐआ. ५।१।१।१-२.

कद्वन्तः प्रगाथाः अहरहः शस्येषु स्वच्छया मका वैश्वतारम्भहेतुत्वात् आरम्भणीया' । कस्तमिन्द्र त्वावसु, कन्न यो अतमीना, कद्भून्वस्याकृतं इति । २९।५।१-४.

कन्यादानं आत्रेयः उदमयः अङ्गराजपुरोहितः दशसहस्राणि निष्कण्ठीः आत्मकन्याः अदात् । ३९।८।६.

कपालनाशे ( हरवल्यास ) प्रायश्चित्तं ' आश्विनी इष्टिः ' इत्यत्र द्र० । ३२।८।२.

कयाशुभीय सूक्त पञ्चदशर्चं कया शुभा सवयसः सनीळाः इति । इदमेव सहानसक्तं नाम, इन्द्रोऽगस्त्यो मरुतस्ते समजानत ( तेषां एतेन ऐकमत्यमभूत् ), संतनिसूक्तं इदमेव सतानकरत्वात्, आयुष्यसक्तं चेद आयुष्करत्वात् । द्वादशाहे छन्दोमप्रथमेऽहनि मरुत्वतीये शस्त्रे इदमुपान्त्य सूक्तम् । २३।१।११३-१६.

करम्भः सवनीयपुरोडाशेषु द्वितीयं हविः । मन्थं संयुक्त करम्भः इत्याचक्षते । व्रीहियानाना सक्तवः मन्थः सन् करम्भ । ( पाण्यात किंवा दह्यात कालविलेलें भाताच्या लाह्यांचें पीठ ) ८।५, ८।६।१। तस्य याज्या ' पूषण्वान् करम्भमत्तु ' इति । ८।६।५.

कलि शयानो भवति । ३३।३।४ ( बेवाकधर्पणें झोपा काढणें म्हणजे कलि ).

कवषस्य ऐलूषस्य आख्यायिका अपोनप्त्रीयसूक्तप्रशंसार्था । ऋषयो वै सरस्वत्या सत्रमासत । ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः, कथ नो मध्येऽदीक्षिष्टेति, स बहिर्धन्वोदवहन् अत्रैनं पिपासा हन्तु, सरस्वत्या उदकं मा पादिति । स बहिर्धन्व उदूळ्हः पिपासया वित्त एतदपोनप्त्रीयमपश्यत् प्र देवत्रा ब्रह्मणे गातुरेतु इति । तेनापा प्रिय धामोपागच्छत् । तमापोऽनूदायन् तं सरस्वती समन्तं पर्यधावत् । तस्माद्धाप्येतर्हि परिसारकमित्याचक्षते यदेनं सरस्वती समन्तं परिससार । ते वा ऋषयोऽब्रुवन् विदुर्वा इमं देवाः, उपेमं ह्वयामहे इति तथेति, तमुपाह्वयन्त । ८।१।१-४.

कश्यपगोत्रजब्राह्मणरहितं यज्ञं जनमेजयश्चके । ३५।१।२.

काण्डवीणाः पत्न्यो वादयन्ते महाव्रते । ऐआ. ५।५।१३.

काम्येन नित्यसिद्धिः इति मीमांसकानां डिण्डिमः ।

१।२।१६ सायणः ।

कारव्याः नाम ऋचः कुन्तापसूक्ते चतस्रः । ताः पच्छः शस्तव्याः, तासु निनर्दः । इन्द्रः कारुमबूबुधत् इत्याद्याः। ३०।६।१६–१८.

काल उपसदां अग्निष्टोमे । दिनत्रये सुपूर्वाह्णे स्वपराह्णे ।४।६।७.

कालः दीक्षणीयायाः आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा हविषा तस्मिन् हविषि तस्मिन् बर्हिषि दीक्षेत (तस्मिन्नेव दिने इत्यर्थः) । सा एका दीक्षा (एकः प्रकारः) । सोमपूर्वकमेवाधान इति द्वितीयः प्रकारः । १।१।१२.

कालः द्वादशाहस्य । शैशिरयोर्मासयोर्दीक्षेत । १९।४।१–३ । आपूर्यमाणपक्षेषु यजन्ते । १९।५।८.

काल. प्रातरनुवाकस्य । महति रात्र्ये, पुरा वाचः प्रवदितोः, पुरा शकुनिवादात्, अध्वर्युणा उपाकृते । ७।५।८–१५.

किंपुरुषः अमेध्यः अभक्ष्यः ।६।८।६.

किरिशः नाम राजा । तस्य पुनः सुत्वन्। स च सुत्वा भार्गायणः भर्गस्य गोत्रापत्यम् । ४०।५।१८.

कीकसाः = पार्श्वे स्थिता मासखण्डा. । ३१।१।२ सायणः ।

कीर्तिकामस्य महाव्रते आज्यशस्त्र, अग्नोध्याग्नि समिधा इति द्वादशर्चम् । ऐआ १।१।१५.

कुन्तापसूक्तं त्रिंशदर्चं षष्ठेऽहनि ब्राह्मणाच्छंसिशिल्पे वृषाकपेरुत्तरम् । तत्रेतिहासः, " छन्दसा वै षष्ठेनाह्ना आप्ताना रसोऽत्यनेदत् (अतिक्रम्यागच्छत्) स प्रजापतिरबिभेत् पराङयं रसो लोकान् अत्येष्यतीति, स परस्ताच्छन्दोभिः पर्यगृह्णात्, नाराशस्या गायत्र्याः, रैभ्या त्रिष्टुभः, पारिक्षित्या जगत्याः, कारव्यया अनुष्टुभः । तत् पुनश्छन्दःसु रसमदधात् " इति । ३०।६।१-२ । नाराशंसीः शसति इद जना उपश्रुत इत्याद्यास्तिस्र. । ३-६ । रैभीः शसति, वच्यस्व रेभ वच्यस्व इत्याद्या स्तिस्र. । ७-९ । पारिक्षितीः शसति, राज्ञो विश्वजनीनस्य इत्याद्याश्चतस्रः ।१०-१५। कारव्याः शसति, इन्द्रः कारुमबूबुधत् इत्याद्याश्चतस्रः । नाराशस्यादिषु कारव्यान्तासु न्यूङ्खो नास्ति । निनर्दस्तु कर्तव्यः । १६-१८ । दिशा क्लृप्तीः शंसति, यः सभेयो विदथ्यः इत्याद्याः पञ्च. ता अर्धर्चशः शसति । १९-२२ । जनकल्याः शंसति, योऽनाक्ताक्षः इत्याद्याः षट् अर्धर्चशः शंसति । २३-२४ । इन्द्रगाथाः शंसति, यदिन्द्रादो दाशराज्ञे इत्याद्याः पञ्च, अर्धर्चशः शंसति । दिशा क्लृप्त्यादिषु न्यूङ्खनिनर्दौ न स्तः । २५-२६.

कुम्ब्या = आचारशिक्षणरूपा ऋक् । ब्रह्मचार्यसि अपोऽशान । कर्म कुरु दिवा मा स्वाप्सीः इत्यादिः । ऐआ. २।२८।८ सायणः

कुष्ठाः = कोणाः । ऐआ ५।३।८ सायणः ।

कुहूः = या उत्तरा अमावास्या सा (सा नष्टेन्दुकला कुहूः इत्यमरः) । ३२।९।३.

कूर्चान् होतकाः समारोहन्ति ब्रह्मा च महाव्रते दर्भासनानि । ऐआ. ५।४।१६.

कृतं सपत्रे चरन्, चरैव । ३३।३।४.

कृन्तत्रं कृन्तन छेदः । २३।१।१३.

कृष्णाजिनं दीक्षितसंस्कारः । उन्मुच्य कृष्णाजिनमवभृथमभ्यवैति । १।३।१७-१८.

कौषारवः = कुषारोः कुषारवस्य वा पुत्रः मैत्रेयो महर्षिः परिमरमन्त्रज्ञानवान् आसीत् । ४०।५।१८.

क्रम. । संहितापदक्रमोपासनाः । ऐआ. ३।१ ६.

क्रयः सोमस्य प्राच्या दिशि अग्निष्टोमे । ३।१।१.

क्लोमा = हृदयपार्श्ववर्ती मांसखण्डः । ३१।१।२ सायणः ।

क्षत्र नाम मानसोत्साहरूपं शौर्यम् । ४०।१।४ सायणः ।

क्षत्रिययज्ञ. उक्थ्यसंस्थ एव पञ्चदशस्तोम इति केचित् । वस्तुतस्तु ज्योतिष्टोमे एवाग्निष्टोमः स्यात् । तस्य चतुर्विंशति स्तुतशस्त्राणि भवन्ति । २६।४।२-६.

क्षत्रिययज्ञे विशेषः । देवयजनयाचनं आदित्यं प्रत्येव । दीक्षादिने पूर्वाह्णे उद्यन्तमादित्यमुपतिष्ठेत ' इद श्रेष्ठ ज्योतिषा ज्योतिरुत्तम॰ ' ऋक्, ' देव सवितर्देवयजन मे देहि ' इति यजुश्च । ३४।२।१-२.

इष्टापूर्तस्यापरिज्यानि नाम होम पुरस्ताद्दीक्षाया चतुर्गृहीतमाज्य आहवनीये ' पुनर्न इन्द्रो मघवा ददातु ब्रह्म पुनरिष्ट पूर्तंदात् स्वाहा ' इति । ३४ ३।१ २ । अथ अनन्याया समिद्वत्युपामुपरिष्टात् ' पुनर्नो अग्निर्जातवेदा ददातु क्षत्र पुनरिष्ट पूर्तं दात् स्वाहा ' इति । ३ ४ । अथवा ' ब्रह्म प्रपद्ये ब्रह्म मा क्षत्राद् गोपायतु ब्रह्मणे स्वाहा ' इति पूर्वहोममन्त्र , ' क्षत्र प्रपद्ये मा ब्रह्मणो गोपायतु क्षत्राय स्वाहा ' इत्युत्तरहोममन्त्र , ३४।४।१ ॥ । आहवनीयोपस्थान पूर्वहोमादनन्तर ' नेन्द्राद्देवताया एमि न त्रिष्टुभश्छन्दसः ' इत्यादिना । ३४।५।१ ४ । उत्तरहोमादनन्तर नाग्निर्देवताया एमि न गायात्र्याश्छन्दस ' इत्यादिना । ३४।६।१ ४ । दीक्षितस्यावेदनं, ' अदीक्षिष्टाय ब्राह्मणोऽसौ अमुष्य पुत्र ' इत्यादिर्ब्राह्मणमन्त्र एव । ब्राह्मणप्रवरापेक्षाया तु पुरोहितस्यार्षेयेण ३४।७।१-४ । यजमानभाग दीक्षणीयादिषु ब्रह्मणे परिहृत्य, अग्नौ हैके जुहति ' प्रजापतेर्विभान्नाम लोकस्तस्मिंस्त्वा दधामि सह यजमानेन स्वाहा' इति । तत्तथा न कुर्यात् । ३४।८।१ ६ । फलचमस । न्यग्रोधस्यावरोधा फलानि चोदुम्बराणि आश्वत्थानि प्लाक्षाणि च अभिषुणुयात् । क्षत्रियस्य सोऽय फलभक्ष, न सोमभक्ष. । ३५।१ ५, ३५।६।१-३ । फलचमसस्य प्रयोग । सोमक्रयात् प्राक् न्यग्रोधावरोहान् औदुम्बराश्वत्थप्लाक्षफलानि क्रमेण सम्पादनीयानि । सोमाभिषव जात न्यग्रोधादि द्रव्य द्वेधा विभज्य एक भाग मध्यदिनाय अवस्थाप्य अपर भाग अभिषुणुयात् । ३५।६।४ । सोमचमसोन्नयन कृत्वा फलचमसमुन्नयेत् । तस्मिन् द्वे दर्भतरुणे प्रास्ते स्याताम् । वषट्कृते तयोरेक अन्त परिधि प्रास्येत् आ दधिक्रावण ' इति ऋचा सस्वाहाकारया । सोमचमसाहरण काले यजमानचमसमाहरेत्, भक्षणार्थं सोमचमसोद्ग्रहण काले फलचमसमुद्गृह्णीयात् । इळामुपहूय यदा होता सोमचमस भक्षयेत् तदा यजमान सोमचमस भक्षयेत् । भक्षमन्त्रश्च ' यदत्र शिष्ट रसिन सुतस्य ' इति ब्राह्मणे पठित । ३५।७।१ ४ । आत्मस्पर्श भक्षणोत्तर श न एधि हृदे पीत प्राण आयुर्जीवसे सोम तारी. ' इति ।

५। फलचमसाप्यायन मन्त्रद्वयेन 'आप्यायस्व समेतु ते ' ' स ते पयासि समुयन्तु वाजा ' इति ।७। आसादन प्रश्नम्न सोमचमसवत् । ३५ । ८ । १ । अथ नाराशसस्य फलचमसस्य भक्षण 'नराशसपीतस्य देव सोम मतिविद ऊमै पितृभिर्भक्षितस्य भक्षयामि ' इति मन्त्रेण प्रात सवने । ' नराशसपीतस्य० ऊर्वै पितृभिर्भक्षितस्य भक्षयामि' इति माध्यदिने । नराशसपीतस्य० काव्यै. पितृभिर्०' इति तृतीयसवने । ३५।८।१। आत्मस्पर्श आप्यायन च पूर्ववत् । माध्यदिने तृतीयसवने च प्रात सवनवत् सोमचमसावृता च । ५ ६ । स्तोत्रशस्त्रेषु विशेष, प्रात सवन तृतीय सवन च प्राकृतमेव । माध्यदिने माध्यदिन पवमान आभिजिदादिवत् । पवमान रथतरम् । मरुत्वतीयं शस्त्रं, प्रतिपत् ' आ त्वा रथ यथोतये ' तृच , अनुचर स्तृच ' इद वसो सुतमन्ध ' । बृहत् पृष्ठ, इन्द्रनिहव प्रगाथ ब्राह्मणस्पत्य प्रगाथ प्रकृतिवत् । धाय्या प्रकृतिवत्, मरुत्वतीय प्रगाथ ' प्र व इन्द्राय बृहते ' ऐन्द्रिक । ३६।१।१ ८ । निविद्धान सूक्त ' जनिष्ठा उग्र सहसे ' इत्येकादशर्चं गौरिवीतम् । निष्केवल्यं शस्त्र प्रतिपत् ' त्वामिद्धि हवामहे,' अनुचर ' अभि त्वा शूर', धाय्या ' यद्वावान ', सामप्रगाथ ' उभय शृणवच्च न ' ।३२।२।१-५। निविद्धान सूक्त 'तमु ष्टुहि य इति पञ्चदशर्चं भारद्वाज, बृहत् पृष्ठम् । ३६।३। १ ५ । होत्रकाणा शस्त्राणि प्रकृतिवत् । ३६।४।१। आभिषेको यज्ञाङ्ग । ३७।१ ७.

क्षत्रिययज्ञे क्षत्रिय यजमान स्वान्यायुधानि निधाय ब्रह्मण आयुधानि स्वीकरोति । ३४।१।१९.

क्षत्रिययज्ञे सर्वत्र बृहत् पृष्ठम् । ३६।३।५.

क्षत्रिययज्ञे अग्निप्रणयनीयासु त्रिष्टुप् प्रथमा । ५।२।४ ९.

क्षत्रियस्य अभिषेकानन्तरमग्निष्टोमयागोदाहरण जनमेजय पारिक्षित. । ३७।७।७ ९.

क्षत्रियस्य आयुधानि अश्वरथ , कवच इषुधन्व च । ३४।१।२.

क्षत्रियस्य सान्नाहुकस्य यत मेध्यत्वम् ।

३३।२।७-८.

क्षत्रियस्य सोमभक्षः दधिभक्षः अन्नभक्षो वा नेष्ट, किंतु फलचसमभक्ष एव। ३५।३।१-४.

क्षत्रियस्य सृष्टिः प्रजापतिर्यज्ञमसृजत, यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येताम्। ३४।१।१.

क्षत्रियात् ब्राह्मणो भूयान्। ३३।३।८.

क्षुत्पिपासयोः सर्वेष्वेव इन्द्रियेषु भागो भवति। ऐआ. २।२२।५.

क्षुद्रसूक्ताः मण्डलेष्वेव. प्राणदृष्ट्या उपास्याः। ऐआ. १।१।१-६.

खरमवेक्षते प्रवर्ग्ये ' गन्धर्व इत्था पदमस्य ' इति, होता। ४।५।३.

खरे महावीरस्य सादने अनुवचनीया ऋक् ' सत्रीदस्व महाँ असि ' इति। ४।२।५.

खादिरः यूपः स्वर्गकामस्य। ६।१।५.

गण्डूपदस्य सृष्टिः ( गाडूळ-गाडवळ )। सोमाहरणकाले गायत्र्याः सोमपालेन नखच्छेदे कृते यानि स्नाव नि, ते गण्डूपदा अभवन्। १३।२।१.

गतश्रियः प्रजातिकामस्य देविकाहवींषि देवीना हवींषि च समुच्चयेन कर्तव्यानि अनुबन्ध्यापुरोडाशोत्तरम्। १५।४।६, ९.

गर्दभस्य सृष्टि', प्रजापते. रेतसः प्रदीप्तस्य भस्मनः सकाशात्। १३।१०।२.

गवयः अमेध्यः अभक्ष्यः। ६।८।१.

गवयस्य सृष्टिः गर्दभरूपेण। १३।१०।२.

गवामयन सत्र षट्यधिकशततमदिनसाध्यम्। प्रतिदिनं च अग्निष्टोम-उक्थ्य-षोडशी-अतिरात्राणा संस्थानामन्यतमया युक्तः सोमयाग एवानुष्ठीयन। तत्र प्रथमे दिवसे अतिरात्रः, द्वितीये चतुर्विंशस्तोमः उक्थ्यः १७।६-८। अतिरात्रः अन्तिमः।१७।८।३-८। अभिप्लवः षडह। १८।१। षडहाः षष्ठा १८।२। स्वरविधिः १८।३।१-४। अभिप्लवषडहा ,पृष्ठ्यषडहाः १८।३।८। विषुवान्। १८।४-८। विषुवत' अवस्तात् परस्ताच्च दशाहद्वयम्।१८।४।४। स्वरसामान. त्रयस्त्रयः इति षट्। १८।४ ५। अभिजित् सर्वस्तोमः, विश्वजित् सर्वपृष्ठश्च। १८।५।२। महाव्रतं १८।८।८।९.

गाथानां प्रतिगरः ' एवं तथा ' इति, शौनःशेपाख्याने राजसूये। ३३।६।१२-१३.

गाथा सर्वलोकस्य प्रसिद्धार्थप्रतिपादिका ऋक्, ' प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्र ' इत्यादिः। ऐआ. २।१८।८ सायण.।

गायत्र प्रात.सवन अग्निष्टोमे।२६।२।८.

गायत्रतृतीयसवनः छन्दोमत्र्यहः। २३ २।१२, १७; ४।१४, १९. २४।२।१५, २१.

गायत्री अनुष्टुभमसृजत। १९।६।६.

गायत्री अष्टाक्षरा प्रातःसवनमुदयच्छत्।१३।४। १-२.

गायत्रीकारं शंसनं नाम पादद्वये अष्टाक्षरे अवसाय अष्टाक्षरतृतीयपादे प्रणवः इति। ऐआ. ५।१२।२ सायणः।

गायत्री छन्दः प्रथमेऽहनि षडहे। ३०।१।१-२.

गायत्री तृचाशीतिः महाव्रते निष्केवल्ये शस्त्रे. गायत्रीं तृचाशीतिं शसति, अथ सूददोहाः। ऐआ १।१९।१। महाँ इन्द्रो य ओजसा इति सूक्त, तत्रान्तिम तृचमुद्धरेत्, पुरोळाश नो अन्धसः इति तृचः, इद वसो सुतमन्धः इति सूक्त, तत्र प्रथम अन्तिमं च तृचमुद्धरेत्, तत्रैव स्वादवः सोमाः इति ऋचमुध्दृत्य, तत्स्थाने 'न ह्यन्य बळाकर' इत्येता प्रत्यवदधाति, अश्वानो नु शतक्रतुः इति ऋक्, पान्तमावो इति सूक्त तत्रान्त्यामुद्धरेत्, प्रकृता-पूर्जासुविः इति सूक्तं, आ ॥ द्रव इति सूक्तम्। एष २४० गायत्र्यः तृचाना अशीतिः। ततः सूददोहाः पठनीया। ऐआ. ५।११।२ सायणः।

गायत्रीषु उष्णिक्छन्दःसंपादनं महाव्रते निष्केवल्ये शस्त्रे औष्णिहतृचाशीतौ। यथा, सप्त गायत्र्यो मिलित्वा षट् उष्णिहः संपद्यन्ते। सप्तम्या गायत्र्या अक्षरचतुष्काणि षट् भवन्ति। तेषु एकैक अक्षरचतुष्क पूर्वासु षट्सु गायत्रीषु प्रत्येकमन्ते योजनीय, एवं सर्वेष्वपि गायत्रीसप्तकेषु उष्णिक्त्व संपद्यते। ऐआ.५।११।२ सायणः।

गायत्रीषु निविदं दधाति। २१।२।५; २२।१।१४; ३।५; ८।१३.

गायत्रीसोमाहरणादिमाहात्म्यज्ञानरान् दानयाग्रम्। १३ । ४ । ६.

गायत्र्यः द्वितीयस्य त्र्यहस्य माध्यंदिन वहन्ति। २२।७।१३; ८।६.

गायत्र्यौ तृतीयसवने वैश्वदेवस्य प्रतिपदः तृचस्य उत्तरे द्वे ऋचौ, अनुचरश्च सर्वः गायत्रः। १३।४।३.

गायत्र्यौ माध्यंदिने मरुत्वतीयस्य प्रतिपदः उत्तरे द्वे ऋचौ, अनुचरश्च सर्वः गायत्रः। १३।४।२.

गार्हपत्याहवनीयौ यदि मिथः संसृज्येयातां तदा प्रायश्चित्तं, अग्नये वीतयेऽष्टाकपालं निर्वपेत्। 'अग्न आ याहि वीतये, यो अग्निं देववीतये' इति याज्यानुवाक्ये। आहुतिं वा आहवनीये जुहुयात् अग्नये वीतये स्वाहा इति। ३२।५।२.

गार्हपत्ये उपशान्ते, आहवनीये च सति सर्वमाहवनीयं भस्मसहितं पात्रे समोप्य, गार्हपत्यायतने निधाय अथ प्राञ्चमाहवनीयमुद्धरेत्। ३२।४।८.

गर्णे आश्विनं तत्र प्रायश्चित्तं च 'आश्विनं निविध' इत्यन द्र०। १५।२।१ १०.

गुग्गुलु प्रसिद्ध धूपसाधनम्। ५।२।२८ सायणः।

गृत्समदः मण्डलर्षिः प्राणदृष्ट्या उपास्यः। ऐआ २।१।१-६; १०।१ ५.

गृहपतेः भार्यायाः यो मतप्रदः, तस्य सव्यौ पादौ ओष्ठार्धं च पशुभागः। गृहपतेर्यो व्रतपदः, तस्य तु दक्षिणौ पादौ ओष्ठार्धं च पशुभागः। ३१।१।२.

गृहपतेः सद च अनूकं च (पृष्ठवंशश्च वस्तिश्च शासना वा) पशुभागः। ३१।१।२.

गोः यमलजनने प्रायश्चित्तं 'यमलजनने' इति शब्दे द्र०। ३२।८।८.

गोः सृष्टिः। देवताः ईश्वरमब्रुवन् 'आयतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति। ताभ्यो गामानयत्। ता अब्रुवन् न वै नोऽयं अलं' इति। ऐआ २।२२.

गौः देवता पञ्चमेऽहनि षडहे। २२।२।१-५.

गौः मेध्यः। ६।८।२.

गौरमृगः नाम पशुः यस्य शृङ्गे अपि लोमशे। सः अमेध्यः अभक्ष्यः। ६।८।६। स च प्रजापतेः रेतसः प्रदीप्तस्य भस्मनः सकाशात् अजायत। १३।१०।२.

गौरिवीतं षोडशि साम विहवे 'अभि ॥ गोपतिं गिरा' इत्यस्या ऋचि उत्पन्नम्। १६।२।१, ४.

ग्रहग्रहणं द्विदेवत्यानां एकेनैव पात्रेण। यागस्तु पात्रद्वयेन। ९।३।१.

ग्रहाः प्रातःसवने नव गृह्यन्ते अग्निष्टोमे 'नव प्रातर्ग्रहा गृह्यन्ते'- धाराग्रहाः। ११।१।१.

ग्रहाणां द्विदेवत्यानां प्रतिग्रहणे होतुर्मन्त्रास्त एव, यैरध्वर्युः प्रयच्छति 'मयि वसुः पुरेवसुः' इत्यादयः ९।३।२.

ग्रहोक्थं पवमानोक्थं चेति द्वेधा उक्थम्। यत् पवमानस्तोत्रार्थं, तत् पवमानोक्थम्। प्रातःसवने प्रथमं होतुराज्यं, माध्यंदिने मरुत्वतीयं होतुः पृष्ठं, तृतीयसवने वैश्वदेवं होतुः शस्त्रं इति पवमानोक्थानि। माध्यंदिने होत्रकाणां च यानि शस्त्राणि ग्रहोक्थानि। ३६।१।४.

ग्रावस्तुत् अग्निष्टोमे माध्यंदिने ग्रावस्तोत्रमन्वाह। तत्र अर्बुदस्य काद्रवेयस्य ऋषेः। २९।१।१-३। तत्र उष्णीषेण ग्रावस्तुत. 'नेत्रवेष्टन ।४-७। ग्रावस्तोत्रे ऋचः शतं वा त्रयस्त्रिंशत् वा, अपरिमितः इति मुख्यः पक्षः ।२९।२। -५। शंसनं च अक्षरशः, चतुरक्षरशः, प छ, अर्धर्चशः, ऋक्शः इति पक्षाः। तत्र अर्धर्चशः इति सिद्धान्तः। ६-७। गायत्रीभिश्च जगतीभिश्च ।८-९। सर्वे नाम्नि ।१०.

ग्रावस्तुतः स्कन्ध्या मणिकाः तिस्रश्च कीकसाः पशुभागः ३१।१।२.

ग्रावस्तोत्रीयं 'अभि त्वा देव सवितः' इयं ऋक् लिः, युञ्जते मनः इति ऋक्, आ त्वा न इन्द्र इति ऋक्, मा चिदन्यत् इति ऋक्, प्रैते वदन्तु (१-१३), आव ऋञ्जस ऊर्जां (१-८) ॥ वो ग्रावाणः (१-४)। ततः यावदभिषुतः सोमो भवति, यावद् वा ग्रहा गृहीता भवन्ति, तावत् स्वादिष्ठया मदिष्ठया इत्यादिपावमानीभिरभिष्टुयात्। सुते 'अध्वरे अधि' इति परिधानीया। के चित्तु 'प्रैते वदन्ति' इति चतुर्दशर्चं अर्बुदसूक्तमेव

ग्रावस्तोत्रीयं, 'प्र वो ग्रावाणः' इति चतुर्ऋचमेवान्ये, गाणगारिमते तु 'आप्यायस्व समेतु ते' इत्यादि अन्यदेव ग्रावस्तोत्रम्। प्रयोगः।

ग्रीवाः महाव्रते पक्ष्याकारत्वेन कल्पितस्य निष्केवल्यशस्त्रस्य 'ग्रीवा यस्येदमारजः' इति तृचः शाखान्तरीयः पञ्चमे शौनकेन पठितः, तदन्ते सूददोहा। ग्रीवा अर्धर्चशः शंसनीयाः। ऐब्रा १।१७।२–३,; ५।७।१–५,१४.

घर्मतन्वः नाम 'प्रपथ्य यस्य सप्रथश्च नाम' इति तृचः।४।४।२–३.

घर्मसंभरणविधिः। ४।१।१–२। प्रवर्ग्यानुष्ठाने अनुज्ञापनमन्त्रः 'ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामः' इति। प्रैषमन्त्रः होतरभिष्टुहि इति। १.

घर्मस्य स्विष्टकृदग्नि तस्यानुवषट्कारेण सिद्धिः। ४।५।६.

घृतयागस्य द्वितीयस्य याज्या वैष्णवी 'उरु विष्णो विक्रमस्व' इति। अग्निष्टोमे माध्यंदिने वैश्वदेवोत्तर घृतयागौ द्वौ, मध्ये सौम्यश्चरुश्च भवति।१३।८।१.

घृतयागस्य प्रथमस्य याज्या आग्नेयी 'घृताहवनो घृतपृष्ठो अग्निः' इति। १३।८।१.

घृते चरुः प्रतिष्ठाकामस्य दीक्षणीयायाम्। १।१।८–११.

चक्षुर्वै सत्यं, 'एतदेव मनुष्येषु सत्यं निहितं यच्चक्षुः'। २।१६।१०–११.

चतुर्थमहः आनुष्टुभ पृष्ठ्ये षडहे। २१।४।६.

चतुर्थेऽहनि न्यूङ्खः निष्केवल्ये शस्त्रे 'मूर्द्ध भुव इन्द्रः परिस्मिन्' इति सूक्ते, माध्यंदिनीयत्वात् प्रथमे पादे (२१।३।१२) पृष्ठ्ये षडहे। २१।५।१.

चतुर्थेऽहनि न्यूङ्खः प्रातरनुवाके प्रथमे पादे, आज्यशस्त्रे उत्तमार्द्धे तृतीये पादे, माध्यंदिने प्रथमे पादे पृष्ठ्ये षडहे। २१।२।१०-१२.

चतुर्थेऽहनि पृष्ठ्यषडहस्य 'प्र ते गिरो अति सुग्व' इति चतुर्थः, 'प्र वो महे' इति मित्रः इति मत्रिवाव. मन्त्रसूक्तानाः अहीनसूक्तेषु आवापिकाः 'यज्ञा मह इन्द्र' इत्यादयः त्रय वैमदीयाः आवापिकाः।

२९।३।९.

चतुर्थेऽहनि पृष्ठ्ये षडहे वाग् देवता, एकविंशः स्तोमः, वैराजं साम, अनुष्टुप् छन्दः, आज्यशस्त्रं, प्रउग, मरुत्वतीयं, निष्केवल्यं।२१।४।१-४। वैश्वदेवं आग्निमारुतम्। २१।५।१-१७.

चतुर्विंशस्तोमस्य विवृतिः। १७।६।१ सायणः।

चतुर्विंशं नाम गवामयनस्य द्वितीयमहः आरम्भणीयम्। उक्थ्यो वा अग्निष्टोमो वा १७।६-८। चतुर्विंशः स्तोमः।१७।६।३। उक्थ्यस्य पञ्चदश स्तोत्राणि, पञ्चदश शस्त्राणि, स्तोत्रियाः त्रीणि शतानि षष्टिश्च. अग्निष्टोमः स्यादित्याहुः, अष्टचत्वारिंशाः त्रयः पवमानाः चतुर्विंशानि इतराणि स्तोत्राणि। उक्थ्य एव स्यात्। बृहद्रथंतरे सामनी विकल्पेन। निष्केवल्यशस्त्रे 'तदिदास भुवनेषु' इति बृहद्दिव सूक्तं शस्तव्यम्।

चतुर्विंशे अहीनपरिधानीयाभिः परिदध्युः। तत्र मैत्रावरुणः ऐकाहिकाभिरेव सवनद्वये (१–२) परिदध्यात्, ब्राह्मणाच्छंसी प्रातःसवने अहीनगताभिः माध्यंदिने च ऐकाहिकाभिः परिदध्यात्, अच्छावाकः अहीनगताभिरेव परिदध्यात्। २९।७।७-९.

चतुर्विंशे अहीनसूक्तानि माध्यंदिने होत्रकाणाम्। २९।२।८.

चतुर्विंशेऽहनि महाव्रते च प्रातःसवने मैत्रावरुणस्य शस्त्रे 'ता नः शक्त पार्थिवस्य', ब्राह्मणाच्छंसिनः मुरुपकृत्नुमूतये, अच्छावाकस्य 'आ सु ते शिशव शिवम्।' ऐब्रा. ५।१।५ सायणः।

चतुष्टोमपदस्य निर्वचनं, वसवो रुद्रा आदित्या विश्वेदेवाः इति चतुष्टया देवाः चतुर्भिः स्तोमैः त्रिवृत्प्रभृतयः ... अभवन् तस्माच्चतुःस्तोमः, स एव चतुःष्टोमः। १४।५।२.

चतुर्होतृमन्त्रः अविवाक्ये दशमेऽहनि. तेषां चितिः स्रुक्चित्..., चित्तपात्रमाज्य... इत्यादीनि. दशहोतानि. तत्र ... 'अविवाक्यं दशम' इत्यत्र द्र०। २४।६।३–१२. २४।३–६.

चन्द्रमाः पुरुषाः इति वाच्यः ऋषिः 'शरीरपुरुषः, छन्द पुरुषः, वेदपुरुषः' महापुरुषः इति। ऐब्रा. ३।९.

चन्द्रमसो वै वृष्टिर्जायते । ४०।५।१५.

चन्द्रमा आदित्याज्जायते । ४०।५।१४.

चन्द्रमा वै अमावास्यामनुप्रविशति सोऽन्तर्धीयते । ४०।५।८.

चमस औदुम्बर । तत्र दधि, मधु, सर्पि, आतपवर्ष्या आप, शष्पाणि, तोक्मानि, सुरा, दूर्वा, इत्यष्टौ द्रव्याणि प्रक्षेप्याणि यशाद्वराजाभिषेकसमारेषु । ३७।१।३.

चमस औदुम्बर तत्र वानस्पत्यानि फलानि, औषधानि तोक्मानि, दधि, मधु, सर्पि, आतपवर्ष्या आप, इति प्रक्षेप्याणि ऐन्द्रमहाभिषेकसमारेषु । ३९।३।१.

चमस होमार्थे भक्षणार्थे च सोमस्य पात्र दीर्घ-चतुरस्र समुष्टिकम् । ३५।६।४ सायण ।

चयनानुष्ठाननिषेध पितृआचार्येतरयागे निष्क्रेय स्योपासकस्य । ऐआ. ३।१०।१-६.

चराति चरतो भग (प्राप्त्यर्थ)। ३३।३।३

चरु घृते प्रतिष्ठाकामस्य अग्निष्टोमे दीक्षणीयायाम् । १।१।८-११

चरैव । 'नानाश्रान्ताय श्रीरस्ति इति रोहित शुश्रुम । पापो नृषद् (परगृहे वर्तमान अलस) वर (अपि) जन, इन्द्र इत् चरत सखा ॥ चरैव'। ३३।३।१. 'पुष्पिण्यश्चरतो जङ्घे, भूष्णुरात्मा फले ग्रहि । शेरे (शेरते) ऽस्य सर्वे पाप्मान श्रमेण प्रपथे हत. ॥ चरैव।' २. 'आस्ते भग आसीनस्य ऊर्ध्व स्तिष्ठति तिष्ठतः । शेते निपद्यमानस्य चराति चरतो भग. ॥ चरैव'। ३ 'कलि शयानो भवति सञ्जिहानस्तु द्वापर । उत्तिष्ठस्त्रेता भवति कृत सम्पद्यते चरन् ॥ चरैव'। ५

चर्मवेधनं राजपुत्रेण महाव्रते। ऐआ ५।५।१३.

चातुर्मास्याना राजसूयोत्पन्नानामपि पृथक् प्रयोगो भवति । ऐआ ५।५।१ सायण .

चातुर्मास्येषु अग्निमन्थनम्। १४।२।६.

चित् एव आत्मा ब्रह्म । ऐआ २।२५.

चित्याग्ने उपस्थानम्। शिरस, प्रदक्षिणमग्नि निष्क्रम्य अग्रेण यूप पुरस्तात् प्राङ्मुखस्तिष्ठन् अग्ने शिर उपतिष्ठते 'नमस्ते गायत्राय यस्ते शिर इति । ऐआ ५।२।२। तेनैव पथेत प्रत्येत्य दक्षिणमुदङ्मुख पक्ष नमस्ते राथतराय यस्ते दक्षिण पक्ष' इति ।५।२।३। अपरेणाग्निपुच्छमुपनम्य प्राङ्मुख उत्तर (पक्ष) 'नमस्ते बृहते यस्ते उत्तर पक्ष, इति। ५।२।४। पश्चात् प्राङ् पुच्छ 'नमस्ते भद्राय यस्ते पुच्छ य ते प्रतिष्ठा इति। ५।२।५ दक्षिणत पुच्छस्य आत्मान 'नमस्ते राजनाय यस्त आत्मा' इति। ५।२।६। इद महाव्रत माध्यदिने, होता।

चित्याग्नेरुपस्थानानन्तर होतु सद प्रवेश. महाव्रते माध्यदिने । ऐआ ५।३।१.

छन्द षष्ठ्ये षडहे प्रथमेऽहनि गायत्री २०।१।१-१-२, द्वितीये त्रिष्टुप् २०।३।१-२, तृतीये जगती २१।१।१-२, चतुर्थे अनुष्टुप् २१।४।१-२, पञ्चमे पङ्क्ति २२।१।१, षष्ठे अतिच्छन्दा २२।७।१.

छन्द पुरुष वर्णसमाम्नाय । तस्य रस अकार, अग्निमीळे इत्यकारादित्वात् । ऐआ. ३।९।२,४.

छन्दांसि गायत्री उष्णिक् अनुष्टुप् बृहती पङ्क्ति त्रिष्टुप् जगती इति सप्त पूर्वाणि, स्वराट् द्विपदा अतिच्छन्दा अन्यश्च किंचित् इति चत्वारि उत्तराणि । ऐआ ५।४।९ सायण ।

छन्दांसि पृष्ठ्ये षडहे पृष्ठस्तोत्रसामाधाराणि क्रमेण गायत्री त्रिष्टुप् जगती अनुष्टुप् पङ्क्ति अतिच्छन्दा इति । १९।६।६ सायण।

छन्दोगेभ्य प्राण शततन्तु सहस्रत्य होता प्रयच्छति महाव्रते । ऐआ ५।४।१-७.

छन्दोमप्रथमेऽहनि आज्य शस्त्र २३।१।१-१० । प्रउग ११,। मरुत्वतीय १२-१९। निष्केवल्य २०-२९, २३।२।१-१। वैश्वदेव २३।२।६-१२। आग्निमारुतम् १३-१६। छन्दोमद्वितीयेऽहनि आज्य त्रैष्टुभ २३।३।६-७। प्रउग ८-९। मरुत्वतीय १०-२०। निष्केवल्य २१-२४, २३।४।१-७। वैश्वदेव ८-१४। आग्निमारुत १५-१९। छन्दोमतृतीयेऽहनि आज्य त्रैष्टुभ २४।१।५-८ प्रउग त्रैष्टुभ ९-१०

मरुत्वतीयं ११–१८। निष्केवल्यं २१–२२, २४।२-१–६। वैश्वदेवं ९–१५। आग्निमारुतं १६–२१.

छन्दोमाः त्रयः द्वादशाहे अष्टमनवमैकादशेषु अहःसु। प्रथमः चतुर्विंशः, द्वितीयः चतुश्चत्वारिंशः, तृतीयः अष्टाचत्वारिंशः। छन्दोभिः गायत्रीत्रिष्टुब्जगतीभिः स्वाक्षरसंख्याद्वारेण मीयन्ते परिच्छिद्यन्ते इति छन्दोमशब्दस्य व्युत्पत्तिः। २३।१।८, २४।१-२.

छन्दोविशेषः प्रातरनुवाके अग्निष्टोमे। आग्नेयानि उषस्यानि आश्विनानि च सप्तसप्त छन्दांसि, देवतास्तिस्रः, छन्दांसि सप्त। छन्दसां क्रमश्चात्र गायत्री अनुष्टुप् त्रिष्टुप् बृहती उष्णिक् जगती पङ्क्तिः इति। ७।७।१२–१७। अत्र व्यूढत्वेऽपि बृहतीमध्यवर्त्तित्वात् अव्यूढत्वम्। ७।८।५.

जगती अतिच्छन्दसमसृजत। २९।६।६.

जगती छन्दः पृष्ठ्ये षडहे तृतीयेऽहनि। २१।१।१-३.

जगती मूलतः चतुरक्षरा, सोमाहरणप्रसङ्गेन एकाक्षरा अभूत्। सा पुनः गायत्र्या त्रिष्टुभायाः संमेलनेन द्वादशाक्षरा सम्पन्ना। सा द्वादशाक्षरा जगती तृतीयं सवनमुदयच्छत्। १३।४।३.

जगतीषु निविदं दधाति। २३।१।१८; २।४; ३।१७; ४।४. २४।१।१८;२।७.

जगतीसहस्रं महाव्रते निष्केवल्ये शस्त्रे शंसन्त्य इत्येके। ऐआ. २।१७।३.

जगत्प्रातः सवनः द्वितीयः त्र्यहः व्यूढस्य पृष्ठ्यषडहस्य। २१।४।५.

जगत्प्रासहाः। जगत्यः बहुला यासु, ताः तृतीयसवनगताः प्रस्थितयाज्याः। २८।४।१५.

जगत्यो वै छन्दोमस्तदस्य मध्यंदिनं वहन्ति व्यूढत्वात्। २३।१।१८; ३।१७; ४।३. २४।१।१८.

जग्धं आर्त्विज्यं तत्र प्रायश्चित्तं च 'आर्त्विज्यं त्रिविधं' इत्यत्र द्र.। १५।२।१-१०.

जनरल्या नाम मन्त्राः कुन्तापसूक्तेषु पठ्य 'योऽनाक्ताक्षः' इत्यादयः, ते जपंचैव शंसनीयाः। ३०।६।२१–२४.

जननाशौचं दशाहम्। यदा वै पशुर्निर्दशो भवति अथ स मेध्यो भवति। ३३।२।३.

जन्मत्रयं जीवस्य। पुरुषशरीरात् रेतोरूपेण स्त्रीशरीरे प्रवेशः प्रथमं जन्म, मातुः सकाशात् द्वितीयं, मृत्वा पुनर्जन्म तृतीयम्। ऐआ. २।१४.

जन्यानि सपत्नाः, प्रतिजन्यानि द्विषन्तो भ्रातृव्याः' ४०।३।३,११.

जपः पुरोहितस्य। यदा राजा पुरोहितं वृणीते, तदा 'अग्निर्वाव पुरोहितः पृथिवी पुरोधाता, वायुर्वाव पुरोहितः अन्तरिक्षं पुरोधाता, आदित्यो वाव पुरोहितः द्यौः पुरोधाता' इति। ४०।४१.

जपः होतुः पशौ अध्रिगुपाठानन्तरं 'शमितारो यदत्र सुकृतं कृणवथास्मासु तत्, यद्दुष्कृतं अन्यत्र तत्' इति। ६।७।१२-१३.

जपः होतुः महाव्रते प्रस्तोत्रा प्रथमप्रतिगरस्य काले कथिते सति, 'सुपर्णोऽसि.' इति, उपर्यधीर्याणि च जपति, 'सं प्राणो वाचा' इत्यादि च जपति, आहूर 'वाक्' इति च जपति। ऐआ. ५।५।४-९.

जपः होतुः, व्याहृतिजपः महाव्रते प्रेङ्खं चालयति जपति, पुनश्चालयति। ऐआ. ५।४।८-१०.

जागतं वै तृतीयसवनम्। २८।४।१५; ७।१,५.

जातवेदसः आयतनं तृतीयसवनं आग्निमारुतशस्त्रे। १०।७।१०.

जातवेदस्यं सूक्तं आग्निमारुतशस्त्रे। अग्निष्टोमे अनुरूपोत्तरं, प्रतव्यसीं नव्यसीं जागतमन्यत् त्रिष्टुप्। १३।१२।१-२। छन्दोमप्रथमेऽहनि 'दूतं वो विश्ववेदसं' गायत्रं अनिरुक्तम्। २३।२।१९। छन्दोमद्वितीयेऽहनि 'अग्ने मृळ महाँ असि' गायत्रम्। २३।४।१८। छन्दोमतृतीयेऽहनि 'प्राग्नये वाचमीरय' गायत्रम्। २४।२।१९ २१। पृष्ठ्ये षडहे प्रथमेऽहनि 'प्रतव्यसीं नव्यसीम्'। २०।२।१४। द्वितीयेऽहनि 'यज्ञेन वर्धत जात' जागतम्। २०।४।११। तृतीयेऽहनि 'त्वमग्ने प्रथमो अङ्गिराः' जागतं त्रिष्टुभः। २१।२।१७। चतुर्थेऽहनि 'अग्निं नरो दीधितिभिः' विराड्त्रिष्टुभश्च। २१।५।१६–१७.

पञ्चमेऽहनि 'अग्निर्होता गृहपतिः' अतिच्छन्दाः तृचः। २२।३।१४। षष्ठेऽहनि '॥ प्रत्नथा सहसा जायमानः' त्रैष्टुभं सूक्तम्। २०।८।८-१०.

जातवेदस्या ऋक् आग्निमारुतशस्त्रे एव, 'जातवेदसे सुनवाम' इति छन्दोमप्रथमे। २३।२।१५। छन्दोमद्वितीये। २३।४।१७। छन्दोमतृतीये। २४।२।१८। पृष्ठ्ये षडहे प्रथमेऽहनि। २०।२।१२-१३। द्वितीये २०।४।१०। तृतीये २१।२।१६। चतुर्थे २१।५।१५। पञ्चमे २२।३।१३। षष्ठे २२।१०।७.

जाया। 'तज्जाया जाया भवति यदस्यां जायते पुनः'। ३३।१।१०। सखा ह जाया। ३३।१।८। पतिर्जायां प्रविशति गर्भो भूत्वा।९। आभूतिरेषा भूतिः बीजमेतन्निधीयते १०। देवाश्चैतामृषयश्च तेजः समभरन् महत्। ११.

जाया बह्व्यः। तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सह पतयः। १२।१२।१.

जीवाति मृतशब्दश्रवणे प्रायश्चित्तं (स्वविषये)। 'अग्नये सुरभिमते अष्टाकपालं निर्वपेत्'। 'अग्निर्होता न्यषीदत्, साध्वीमकर्देववीतिं' इतियाज्यानुवाक्ये। आहुतिं वा आहवनीये जुहुयात् 'अग्नये सुरभिमते स्वाहा' इति। ३२।८।७

जीवरूपेण ब्रह्मणः शरीरे प्रवेशः। '॥ एतमेव सीमानं (ब्रह्मरन्ध्रं) विदार्य एतया द्वारा प्रापद्यत। ऐआ. २।२३।७-८.

जीवस्य जन्मत्रयम्। 'जन्मत्रय जीवस्य' इत्यत्र द्र०। ऐआ. २।२४.

जीवो ब्रह्मैव नापरः। तथ चिदेव। 'प्रज्ञानं ब्रह्म' ऐआ. २।२५।६०.

ज्योतिःष्टोमः चतुःसंस्थः अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति। स च सार्धेन अध्यायपोड शकेन अभिहितः (ऐतरेयकब्राह्मणे)। अस्यैतासंस्थाआश्रित्यैव गवामयनं प्रवर्तते। १७।७।१ सायणः।

ज्योतिष्टोमे वामदेव्यसाम्नि तृतीयस्यामृचि प्रतिपादान्ते 'पु, रु, षः' इति अक्षरोपजपः कर्तव्यः। १५।२।१-१०.

तन्तुमती इष्टिः 'सूतकान्नभक्षणे प्रायश्चित्तं' इत्यत्र द्र० ३२।८।६.

तस्मादेकस्य बह्व्यो जाया भवन्ति, नैकस्यै बहवः सह पतयः। (परस्परैकमत्येन सह वर्तमाना न दृश्यन्ते इति सायणः) १२।१२।१.

तस्य य आत्मानमाविस्तरां वेद। ऐआ. २।१४।१.

तस्य (प्राणरूपस्य ईश्वरस्य) वाक् तन्तिः (दावन) नामानि दामानि। ऐआ. २।६।१.

तानूनप्त्रम्। ते देवा अबिभयुः अस्माकं विप्रेमाण० मनु इदमसुरा आ भविष्यन्ति इति (आमच्या आपसातील यादवीमुळें असुरांचें फावेल) ते व्युत्क्रम्य (एकान्तामध्यें पृथक् पृथक् सभा घेऊन) अमन्त्रयन्त। अग्निर्वसुभिरुदक्रामत्, इन्द्रो रुद्रैः, वरुण आदित्यैः, बृहस्पतिर्विश्वैर्देवैः। तेऽब्रुवन् हन्त या ये नः इमा प्रियतमास्तन्वः ता वरुणस्य राज्ञो गृहे संनिदधामहै। ताभिरेव नः स न संगच्छातै, यो न एतदतिक्रामात् (जो कोणी एकीचा नियम मोडील त्याची प्रियतनू त्याला परत मिळणार नाही) य आलुलोभयिषात् (लोभानें लबाडी करून उपद्रव पाहील) तथेति। ते यद् वरुणस्य राज्ञो गृहे तनूः सन्यदधत, तत् तानूनप्त्रमभवत्। तत् तानूनप्त्रस्य तानूनप्त्रत्वम्। तत्कर्मस्वरूप तु आतिथ्यायाः ध्रौवात् स्रुचि चमसे वा आज्य समवद्यति चतुरवत्त पञ्चावत्तं वा, 'आपतये त्वा गृह्णामि' इत्येतैः प्रतिमन्त्रम्। 'अनाधृष्टमसि०' इति यजमानसप्तदशा ऋत्विजः तानूनप्त्रं समवमृशन्ति (आज्याला स्पर्श करून मैत्रीची शपथ घ्यावी) इति। ४।७।४-८.

तानूनप्त्र कुर्वद्भिः परस्पर द्रोहो न कर्तव्यः। ४।७।७.

तार्क्ष्यं सूक्तं 'त्यमू षु वाजिनं देवजूतं' इति, छन्दोमेषु लिपु, पृष्ठ्ये षडहे च षट्स्वपि अहःसु, निष्केवल्यशस्त्रे भवति। २०।१।१६-१७; २०।३।१४ इ.

तिथिस्वरूप, या परि अस्तमियात् अभ्युदियाद् वा इति, सा तिथिः (यागार्हा)। ३२।९।४.

तीर्थं उत्करचात्वालयोर्मध्यदेशः । ऐआ ५।३।२ सायणः।

तीर्थे मार्जयित्वा । पत्नीशालायाः प्रसृप्य तीर्थे मार्जयित्वा, आग्नीध्रं संप्रपद्य, समन्वारभध्वमित्युक्त्वा 'उप सृजं धरुणं' इति आग्नीध्रीये जुहुयात् । द्वादशाहस्य दशमेऽहनि मानसग्रहे । सदसः प्रसृप्य, तीर्थे मार्जयित्वा पत्नीशालां संप्रपद्य, समन्वारभध्वमित्युक्त्वा 'इह रमेह रमध्वं' इति शालामुखीये जुहुयात् । २४।३।६-१६.

तूष्णींशंसः प्रथमे आज्यशस्त्रे । भूरग्निर्ज्योतिर्ज्योतिरग्नोऽऽऽम्, इन्द्रो ज्योतिर्भुवोज्योतिरिन्द्रोऽऽऽम्, सूर्यो ज्योतिर्ज्योतिः स्वः सूर्योऽऽऽम् । इति षट्पदः तूष्णींशसः । ९।७।४; ८।१ । आहावोत्तरं उपांशु तिर इव (अस्पष्टं) षट्पदः । १०।७।१-४; १०।९।१। त्रिपदः षट्पदो वा इति आश्वलायनः ( ५।९।११ )।तूष्णींशस शस्त्वा उच्चैः पुरोरुचं ( निविदं ) शंसति १०।७।५-६.

तूष्णींशंसे शस्ते केन चिन्निन्दायां कृतायां शापो वा दत्ते 'एष एवैतामार्तिमारिष्यति प्रातर्वाव वयमद्येमं शस्ते तूष्णींशंसे संस्थापयामस्तं यथा गृहानित कर्मणाऽनुसमियादेवमेवैनमनु समिमः' इति मन्त्रं जपेत् । ९।७।६.

तूष्णींशंसे शस्ते केन चिन्निन्दा न कर्तव्या शापो वा न देयः (शंसन० पश्ये) । ९।७।६.

तृतीयसवनं ऐन्द्रार्भवम् । २८।४।६.

" जागतम् । २८।४।१५; ७।१.

" जातवेदस आग्नेय आग्निमारुते शस्त्रे १०।७।१०.

" द्वादशाक्षरा जगती उदयच्छत् । १३।४।३.

" नाराशंस वै तृतीयसवनम् ।२८।८।१.

" वैश्वदेवम् । २७।१।६-११; २८।७।१.

" सद्नाराशंसम् । ८।६।३.

तृतीयसवनारम्भे आदित्यग्रहः । १३।५।१-३.

तृतीयसवने अग्निष्टोमे अहीने च मैत्रावरुणस्य परिधानीया. 'इयमिन्द्र वरुणं', ब्राह्मणाच्छंसिनः 'बृहस्पतिर्नः परिपातु', अच्छावाकस्य 'उभा जिग्यथुः' । २७।५।५। शायणः ।

तृतीयसवने अग्निष्टोमे होत्रकाणां शस्त्राणि न सन्ति अतिरात्रे तु सन्ति ।३०।५।१०

" सवनीयपशोः श्रपयित्वा अङ्गहोमः । ७।३।८-९.

" अच्छावाकः अन्ततः शिल्पेषु, अनाराशंसीः शंसति. ( नाराशंससंबन्धरहिताः ऋतुर्जनित्री इत्यादयः ऋचः ) । २८।८।१-३.

तृतीयसवने आरम्भणीयानि सूक्तानि ऐन्द्राणि जागतानि शस्यन्ते उक्थ्ये ।२८।७।१.

तृतीयसवने उन्नीयमानसूक्तं मैत्रावरुणस्य इहोपयात शवसो नपात' इति सूक्तगता आदिमा नव ऋचः । सप्तैवेति के चित्. तन्न । २८।१।६-१२; ४।१.

तृतीयसवने प्रतिगरः । 'शंसामोदैवोम्' इति अध्वर्युः प्रतिगृणाति पञ्चाक्षरेण । १२।१।४.

तृतीयसवने प्रस्थितयाज्याः होतुः 'इन्द्रऋभुभिर्वाजवद्भिः,' मैत्रावरुणस्य 'इन्द्रावरुणा सुतपा,' ब्राह्मणाच्छंसिनः इन्द्रश्च सोमं पिबतं,' पोतुः 'आ वो वहन्तु सप्तयः, नेष्टुः 'अमेव नः सुहवा', अच्छावाकस्य 'इन्द्राविष्णू पिबत', आग्नीध्रस्य 'इमं स्तोममर्हते' ।२८।४।६-१२.

तृतीयसवने बलिष्ठतमया वाचा शंसेत् ।१४।६।५.

" महत्वतीयसूक्तस्य आरम्भणीयं सूक्तं 'वैश्वानराय पृथुपाजसे' इति वैश्वानरीयम् । १२।३-४-५.

तृतीयसवने महाव्रते आग्निमारुतं शस्त्रम् । ऐआ. १।२२।११-१४, वैश्वदेवम् । १।२२।१-१०, ५।१३।१४.

तृतीयसवने मैत्रावरुणः ऐन्द्रावारुणं 'इन्द्रावरुणा युवं' इति सूक्तं शंसति । तस्य स्तोत्रियः आग्नेयः 'एदु षु' इति, अनुरूपः आग्नेयः 'आग्निरगामि' इति । ब्राह्मणाच्छंसी ऐन्द्राबार्हस्पत्यं 'अ मंहिष्ठाय' इति शंसति । तस्य स्तोत्रियानुरूपौ ऐन्द्रौ 'वयमुत्वा' 'यो न इदं' इति । अच्छावाकः ऐन्द्रावैष्णवं शंसति 'ऋतुर्जनित्री' इति, तस्य स्तोत्रियानुरूपौ ऐन्द्रौ 'अधाहीन्द्र गिर्वणः', 'इयन्त इन्द्र गिर्वणः' । २८।६।९-१०

तृतीयसवने वैश्वदेवशस्त्रस्य, प्रातिपदस्तृचस्य उत्तरे द्वे ऋचौ गायत्र्यौ अनुचरश्च गायत्रः ।१३।४।३.

तृतीयसवने शस्त्रजपः होतुः 'उक्थं वाचीन्द्राय देवेभ्यः' इत्येकादशाक्षरः, अध्वर्योः ओम् इत्येकाक्षरः । १२।१।४.

तृतीयसवने शस्त्रेषु एका ऋच शिष्ट्वा निविद्धानम् ।११।१०।३–५, १०–११.

तृतीयसवने सवनीयपदव्यङ्गहोमाः ।७।३।८-९.

तृतीयसवने स्तोमविवृद्धौ अतिशंसन अपरिमिताभिरेव ऋग्भिः तथा माध्यंदिने । प्रातःसवने तु एकया द्वाभ्यां वा । २७।५।७–८;२९।७।१०–१३.

तृतीयसवने 'स्वरिन्द्रवन्तः स्तुध्व' इति ब्रह्मा स्तोत्रप्रसवमाह । २५।९।५–६.

तृतीयसवने होतुः एवयामरुत् सूक्तं शस्यं भवति। ३०।५।३। तच्च शं नः करति इति रौद्याः धाय्याया उपरिष्टात् मारुतसूक्तस्य च पुरस्तात् । ३०।४।१४-१५.

तृतीयेऽहनि पृष्ठ्ये षडहे त्र्यूहे विश्वेदेवा देवता, सप्तदशः स्तोमः, वैरूप साम, जगती छन्दः । २१।१। १-३ । आज्य शस्त्र 'युक्ष्वा हि देवहूतमान'। ११। प्रउग 'वायवायाहि वीतये' इत्यौष्णिहम् । १२ । मरुत्वतीयं ।१३–१७। निष्केवल्य।१८–२२, २१।२। १-५। वैश्वदेव ।६-१३। आग्निमारुतम् ।१४–१७.

तेजस्कामस्य अपोनप्त्रीये 'अमूर्या उप सूर्ये' इत्यनया अनुप्रपदन एकधनासु । ८।२।२२.

तेजस्कामस्य पालाशो यूपः। ६।१।१०–१३.

तोक्माः = धान्याङ्कुराः (मोड फुटलेलें धान्य) यशाङ्गराजाभिषेके संभारेषु चमसे पात्र्या वा प्रक्षेप्याः। ३७।१।३। ऐन्द्रमहाभिषेके तु धान्यचतुष्टयस्य व्रीहीणां महाव्रीहीणां प्रियङ्गूनां यवानामिति ।३९।२।३–४; ३।१.

त्रयस्त्रिंशः स्तोमः षष्ठेऽहनि पृष्ठ्ये षडहे । २२।७।१.

त्रिणवः स्तोमः पञ्चमेऽहनि पृष्ठ्ये षडहे । २२।१।१–५.

त्रिवृत् स्तोमः प्रथमेऽहनि । २०।१।१८-२.

त्रिवृत् स्तोमस्य उद्यती नाम विष्टुतिः । 'उपास्मै गायता, दविद्युतत्या रुचा, पवमानस्य ते कवे, इति त्रिषु तृचेषु आदिमाः तिस्रः ऋचः प्रथमे पर्याये गातव्याः, द्वितीया द्वितीये पर्याये, अन्तिमाश्च तृतीये पर्याये' सेय उद्यती विष्टुतिः। १४।४।१ सायणः।

त्रिष्टुप् छन्दः द्वितीयेऽहनि पृष्ठ्ये षडहे । २०।३।१–३.

त्रिष्टुप् पङ्क्तिमसृजत ।१९।६।६.

त्रिष्टुप्प्रातःसवनः छन्दोमत्र्यहः । २३ । १ । १० –११; ३।७, ९; २४।१।८–१०.

त्रिष्टुप् मूलतः चतुरक्षरा, सोमाहरणकाले एकाक्षरा अभूत् । पुनः गायत्रीसमेलनेन एकादशाक्षरा संपन्ना सा एकादशाक्षरा त्रिष्टुप् माध्यंदिन सवनमुदयच्छत् । १३।४।२.

त्रिष्टुप्सहस्रं महाव्रते निष्केवल्यशस्त्रे शंस्तव्यं इति के चित् । ऐआ. २।१७।३.

त्रेता, उच्छिष्टेता भवति । ३३।३।४.

त्रैष्टुभानि च जागतानि च सूक्तानि गवामयने विषुवति शस्यन्ते 'यस्तिग्मशृङ्गः,' 'दिवश्चिदस्य इति । १८।७।६, १८।८।३-७.

त्रैष्टुभो हि माध्यंदिनः । ऐआ. १।६।२२.

त्र्यह' द्वितीयः जगत्प्रातःसवनः २३।४।५.

त्र्यहे उत्तरस्मिन् आवापिकाः ऋचः अभ्यूह्याः। विराजश्चतुर्थेऽहनि, 'न ते गिरो अपिमृष्ये' (१–४), 'प्रवोमहे महिवृधे' (१–३) इति सप्त ऋचः । तासु मैत्रावरुणस्य (१–३), ब्राह्मणाच्छंसिनः (३–५), अच्छावाकस्य (५–७) इति । अथवा वैमदीः आवपेरन्, 'यजामह इन्द्र' इत्याद्याः सप्त । तासु मैत्रावरुणस्य (१–३), ब्राह्मणाच्छंसिनः (३–५), अच्छावाकस्य (५–७) इति । पङ्क्तीः पञ्चमे, 'यच्चिद्धि सत्यसोमपाः' इति सप्त । तत्र विभागः पूर्ववत् । पारुच्छेपीः षष्ठे 'इन्द्राय हि द्यौः' इत्यादयः सप्त । विभागः पूर्ववत् ।२९।३।८-९.

दक्षिणाः माध्यंदिने सवने नीयन्ते । १३।१।३.

दक्षिणामेरन्वाधानं कर्तव्यमेव । ३२।११।४-६.

दक्षिणाग्नौ 'अन्नादायान्नपतये स्वाहा' इत्याहुतिं जुहोति अन्वाधानोत्तरम्। ३२।११।५.

दक्षिणा। दातव्यैव यज्ञे दक्षिणा भवति अत्यल्पिकाऽपि।३०।९।११.

दक्षिणादानं आचार्याय ऐन्द्रमहाभिषेके। अभिषिक्तः अभिषेक्त्रे ब्राह्मणाय सहस्र दद्यात्, क्षेत्रं दद्यात्, चतुष्पाद् दद्यात्, अपरिमितमेव दद्यात्। ३९।६।२.

दक्षिणा दोग्ध्र दृष्ट्वा त्यक्ता सती तेनैव वा अन्येन वा न ग्राह्या। 'न निवृत्तदक्षिणा प्रतिगृह्णीयात्'। १०।९।२-३.

दक्षिणासु नीतासु, ता अनु सुब्रह्मण्या सतिष्ठते अग्निष्टोमे। २६।३।१२.

दधिघर्मे दध्ना चरन्ति। १४।२।१.

दधि चमसे पात्र्या वा अभ्यानीय ऐन्द्रमहाभिषेके संभारः। ३९।३।१। यज्ञाङ्गे च राजाभिषेके। ३७।१।३.

दधि वैश्यानां भक्षः सोमयागादौ, न सोम.। ३५।३।३.

दन्तोत्पत्त्यनन्तरं, द्वितीयदन्तोत्पत्त्यनन्तरं मेध्यत्वं कुमारस्य। ३३।२।४-७.

दर्शपूर्णमासयोः उपवसथादिननिर्णय। पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्य, उत्तरामिति कौषीतकम्। या पूर्वा पौर्णमासी साऽनुमतिः, योत्तरा सा राका। या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूः, उत्तरामुपवसेत्। ३२।९।१-५.

दर्शपूर्णमासयोः पञ्चदश सामिधेन्य.। १४।२।४.

दर्शपूर्णमासविकृतिरूपः इळादध., सर्वसानियतः, पशुरिष्टयज्ञः, शौनकयज्ञश्च। १४।२।९ (आपस्तम्ब) द्रष्टव्यः।

दशममहः द्वादशाहे-२४।३।६। प्रशंसा। २४।३।१-४। इद अविवाक्य नाम,। नास्मिन्नहनि केन चित् कस्य चित् विवाच्यं (न वक्तव्यम्)। संशये बहिर्वेदि स्वाध्यायप्रयोग, अन्तर्वेदि इत्येके (आश्व.)। ५। शालामुखीये गार्हपत्यहोम.। ६-१३। आग्नीध्रीये होमः। १४-१६। सर्पराज्ञीषु स्तोत्रं। २५।४।१-५। होता चतुर्होतृन् व्याचष्टे, तदेव शस्त्र। ६-१०; २४।६।१-१३। प्रजापतेस्तनूः ब्रह्मोद्यं च अनुद्रवति। १४-२२। यज्ञादौ औदुम्बरीसमन्वारम्भः।२४।५।१-५। वाङ्नियमः।६-९। वाग्विसर्गः समयाविषिते सूर्ये अस्तमिते एव वा। १०-१६ मानसग्रहः। २४।३।६-१३, २४।४-६.

दशमेऽहनि मानसग्रहे। सदसः प्रसृप्य तीर्थे मार्जयित्वा पत्नीशाला संप्रपद्य 'समन्वारभध्वं' इत्युक्त्वा 'इह रमेह रमध्वं' इति शालामुखीये जुहुयात्। पत्नीशालायाः समृप्य (सर्वे) तीर्थे मार्जयित्वा आग्नीध्रे समपद्य 'समन्वारभध्व' इत्युक्त्वा 'उपसृजं धरुणं०' इति आग्नीध्रीये जुहुयात् २४।३।६-१६.

दशापवित्रं यज्ञाङ्गराजाभिषेके अध्वर्युरुपकल्पयति। ३५।६।४.

दाक्षायणयज्ञे पयसा प्रचरति। १४।२।७.

दाधिक्री ऋक् अनुष्टुप् 'दधिक्राव्णो अकारिषं' इति षष्ठेऽहनि ब्राह्मणाच्छंसिशिल्पे। ३०।१०।८-९.

दानं अदानं च। काले एव दद्यात् काले न दद्यात्। न सर्वदैव दातव्यं रिक्तत्वप्रसङ्गात्। न च सर्वदैव अदातव्य अपकीर्तिप्रसङ्गात्। ऐआ. २।१८।१३.

दानपात्र गायत्रीसोमाहरणादिमाह स्यपर्णवान् १३।४।६.

दासीपरिनर्तनं मार्जालीयं परितः महाव्रते माध्यंदिने। तिस्रः अवमाः षडुत्तमाः (पर्मीत क्मी ३, जास्तीत जास्त ६) शिरस्थितपूर्णकुम्भाः प्रेष्याः प्रति संशास्ति (होता) इमं धिष्ण्यं उदकुम्भं च (तत्र स्थापित) त्रिः प्रदक्षिण परिवजाय दक्षिणैः पाणिभि' दक्षिणानूरूनाघ्नानाः 'एहीदाऽऽऽइद मधुऽऽऽइद मधु इतिवदन्त्यः' इति। ताश्च उदकुम्भान् शिरसि अधि निधाय दास्यो मार्जालीय परि नृत्यन्ति पदो निघ्नतीः इदमधु गायन्त्यः। ऐआ. ५।१।२७-२८। उपाकृते स्तोत्रे संशास्ति 'कुम्भमुदक लेष निनयाय अत्र (मार्जालीये), उत्तरे मार्जालीये (आग्नीध्रीये इत्यर्थः), शेषमन्तर्वेदि' इति। तासथा कुर्वन्ति। ५।२।१.

दाहे। अग्निदाहे प्रायश्चित्तं 'अग्नयः आग्नेन' इत्यत्र, तदुत्तरे च द्र०। ३२।६।; ७।४.

दिगुपस्थानं यशाङ्गराजाभिषेके समिदाधानोक्रमणोत्तरं 'क्लृप्तिरसि दिशां मयि०' इति अपराजितां दिशमुपतिष्ठते। ३७।५।१३.

दिवाकीर्त्यं, दिवैव कीर्तनीयं मन्त्रजातं यस्मिन्, तत् त्रिपुरदहः दिवाकीर्त्ये गवामयने मध्यममहः। १८।४।४.

दिव्येनाग्निना अग्नीनां संसर्गे प्रायश्चित्तं 'अग्नीनां' इत्यादौ द्र०। ३२।६।.

दिशांक्लृप्तीः नाम मन्त्रान् कुन्तापसूक्ते अर्धर्चशः शंसति. 'यः सभेयो विदथ्यः' इत्यादीन् पञ्च। ३०।६।१९–२२.

दीक्षणीया अग्निष्टोमे। देवता अग्नाविष्णू।१।१।१–२। द्रव्यं एकादशकपालः पुरोडाशः घृते चरुर्वा प्रतिष्ठाकामस्य। ३–७। कालः, आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव हविषि तस्मिन् बर्हिषि दीक्षेत। एषो (एषा उ) एका दीक्षा। १२। सप्तदश सामिधेनीरनुब्रूयात्। १३–१५। संस्काराः यजमानस्य दीक्षितस्य।१।३।१–२३; १।६।६–१२। आज्यभागयो.। पुरोऽनुवाक्ये १।४।१–७, प्रधानस्य याज्याऽनुवाक्ये। १।४।८–११। संयाज्याः काम्याः नित्ये च।१।५।१–२५; १।६।१–५। तत्रतत्र शब्दे द्र०

दीक्षणियादिषु इष्टिषु यजमानभागो ब्रह्मणे देयः क्षत्रियेण यजमानेन। अग्नौ हैके जुहति 'प्रजापतेर्विभानाम' इति मन्त्रेण। ३४।८।१–६.

दीक्षणीया पत्नीसंयाजान्ता। १५।१।१.

दीक्षा द्वादश द्वादशाहे। १९।२।२.

दीक्षायाः पूर्वे होमः क्षत्रियथागे। चतुर्गृहीतमाज्यं आहवनीये 'पुनर्न इन्द्रो मघवा' इति ऋचमनुद्रुत्य 'ब्रह्म पुनरिष्टं पूर्ते दात् स्वाहा' इति। इष्टापूर्तस्यापरिज्यानिः नाम होमोऽयम्।३४।३।२।१–२; ४।१–४.

दीक्षायाः प्राक् द्वादशाहे प्राजापत्यं पशुं आलभेत। १९।४।४–१२.

दीक्षितत्वावेदने क्षत्रियेऽपि यजमाने ब्राह्मणशब्दस्यैव प्रयोगः। ३४।७।१–४.

दीक्षितविमितात् दीक्षितेन बहिर्न गन्तव्यं, गमनेऽपि सूर्योदये, सूर्यास्तमये च प्रत्यागन्तव्यं, अन्यैरपि यजमानाय ज्ञापनीयं तथा इति नियमः। १।३।१२-१४.

दीक्षितस्य संस्काराः दीक्षायाम्। स्नानं१।३।२–३। अभ्यञ्जनं नवनीतेन।४-५। अञ्जनं नेत्रयोः। ६–७। पावनं दर्भपुञ्जीलैः। ८-९। शालाप्रवेशः। १०-११। नियमविशेषः दीक्षितविमितात् बहिर्गमनाभावः इत्यादिः। १२-१४। अहतं वासः।१५-१६। कृष्णाजिनम्।१७-१८। उन्मुच्य कृष्णाजिनं अपभृथमभ्यवैति। २३। मुष्टीकरणम्। १९। सत्यवदनम्। १।६।६। विचक्षणपदप्रयोगः अन्यसंबोधने। ७-१२.

दुरुक्तोक्तस्य (अपवादेन जनैर्व्यवहृतस्य) अग्निहोमे प्रातरनुवाके ऋचां अष्टौ शतानि अनूच्यानि। ७।७।६.

दुष्टे केशकीटादिना सायं सान्नाय्ये प्रायश्चित्तं, एवं प्रातः, उभयस्मिंश्च। एतत् सर्वे 'सान्नाय्यं' इति शब्दे द्र०। त्रयाणामेव हविषां दोषे प्रायश्चित्तं 'हवींषि' इति शब्दे द्र.। ३२।३।४.

दुहिता कृपण अबलात्वात् परकीयत्वात्।३३।१।८.

दूरोहणं रोहति. हंसवत्या ऋचा 'हंसः शुचिषत्' इत्यनया। १८।६।१-१९, स्वर्गकामस्य तु तार्क्ष्येण सूक्तेन 'त्यमू षु वाजिनं' इत्यनेन। २०-२१, आहूय दूरोहणं रोहति (मन्त्रशंसनमेव दूरोहणारोहणम्). पच्छः प्रथम, अर्धर्चशो द्वितीयं, अथ त्रिपदा, सर्वया ऋचा चतुर्थे इति चतुर्धारमावृत्तिः आरोहे। प्रत्यवरोहणं तु त्रिवारमेव. तत्र त्रिपदा प्रथमं, अर्धर्चशो द्वितीयं, पच्छस्तृतीयमिति। स्वर्गकामानां तु प्रत्यवरोहणं नास्त्येव। १८।७।१-५.

. दूरोहणं 'हंसः शुचिषद्' इतिहंसवत्या ऋचः पच्छः अर्धर्चशः त्रिपदा ऋकुशः (अनवानं) त्रिपदा अर्धर्चशः पच्छः इति सप्तभिः प्रकारैः पठनम्। २१।९।१, पशुकामस्य तु ऐन्द्रे जागते महासूक्ते वरुणा ऋग्गेणा दृष्टे 'प्र ते महे' इति त्रयोदशर्चे दूरोहणं, प्रतिष्ठाकामस्य तु 'श्रुधी यां यश उचत.

सजोषा ' इति ऐन्द्रावरुण्ये सूक्ते, सौपर्णे वा ' इमानि वां भागधेयानि ' इति मैत्रीके सूक्ते ' प्रधारयन्तु ' इति गृह्योक्ते वा सूक्ते दूरोहणं रोहेत् । २९।९।२-७.

दूरोहणोत्तरं ऐकाहिकानि शस्त्राणि शंसनीयानि न तु वालखिल्याभ्यः पूर्वम् । तत्रापि ' चर्षणीधृतं ' इत्यैन्द्रं ऐकाहिकं त्याज्यं, ' आ वा राजानौ ' इति ऐन्द्रावरुणं तु शंसनीयं, नान्यत् । २९।१०।१-१०.

दूर्वा यज्ञाङ्गराजाभिषेकसंभारेषु चमसादौ प्रक्षेप्या । ३७।१।३.

देवता आतिथ्यायां विष्णुः । ३।४।४.

देवता उदयनीयाया प्रायणीयावत् । विशेषस्तु पथ्या स्वस्तिः आज्यहविषा उत्तमा ( आश्वला. ६।१४।३, सत्यावाढः ९।६।८ ) तथा च अग्निः, सोमः, सविता, पथ्या स्वस्तिः, अदितिः इति क्रमः, देशास्तु प्रायणीयानुरोधेन तत्तद्देवतानियत एव । २।५।७-८.

देवताः उपसत्सु अग्नि. सोम. विष्णुश्च । ४।८।२.

देवताः त्रिविधाः आहुतिभागा स्तोमभागाः छन्दोभागा. इति । या अग्नौ आहुतयो हूयन्ते ताभि राहुतिभागास्तृप्यन्ति, अथ यत् स्तुवन्ति उद्गातार , तेन स्तोमभागास्तृप्यन्ति, अथ यत् शंसन्ति होतार., तेन छन्दोभागास्तृप्यन्ति । ७।८।६.

देवताः दीक्षणीयायां आग्नावैष्णव एकादशकपाल पुरोडाश निर्वपन्ति दीक्षणीय अग्निष्टोमे । १।१।१-७.

देवताः पृष्ठ्ये षडहे । प्रथमेऽहनि अग्निः २०।१।१-२, द्वितीये इन्द्रः २०।३।१-२, तृतीये विश्वेदेवाः २१।१।२-२, चतुर्थे वाग् २१।२।२, पञ्चमे गौः २१।३।२. २२।१।१, षष्ठे द्यौः । २१।२।२. २२।७।१.

देवताः प्रउगे शस्त्रे सप्त । वायव्यं शंसति, ऐन्द्रवायवं शंसति, मैत्रावरुण शंसति, आश्विन शंसति, ऐन्द्रं शंसति, वैश्वदेव शंसति, सारस्वत शंसति ११।१।२-८. ११।२।५-१०. ( वायो नर, वायव्यैन्द्रवायवमैत्रावरुणास्तृचाः, अश्विना द्वादश, आश्विनैन्द्रवैश्वदेवसारस्वतास्तृचाः, सप्तैताः प्रउगदेवताः इति सर्वानुक्रमणी).

देवताः प्रातरनुवाके अग्निः उषाः अश्विनौ ७।५।२-७। आग्नेयानि सप्त च्छन्दांसि, उषस्यानि सप्त, आश्विनानि सप्त । ७।७।१२-१७.

देवताः प्रायणीयाया अग्निष्टोमे । पथ्या स्वस्तिं यजति पुरस्तात् , अग्निं यजति दक्षिणतः, सोम यजति प्रतीच्या, सवितारं यजति उत्तरतः, उत्तमामदितिं यजति ऊर्ध्वाया दिशि ( मध्ये इत्यर्थः ) पञ्च देवता यजति । उदयनीयायामेता एव, परंतु पथ्या स्वस्तिश्चतुर्थी, देशास्तु ते एव । २।१।३-१६. २।२।११-१६.

देवताध्यान वषट्कारात् प्राक् होत्रा कर्तव्य ' यस्यै देवतायै हविर्गृहीतं स्यात् ( अध्वर्युणा ) ता ध्यायेत् वषट् करिष्यन् ' । ११।८।१.

देवनीथः नाम मन्त्रः ब्राह्मणाच्छंसिशिल्पे षष्ठेऽहनि. ' आदित्या ह जरितरङ्गिरोभ्यः ' इत्यादीनि सप्तदश पदानि, तानि पदावग्राहं निविद्वत् शंसनीयानि ३० । ८-९.

देवयजनयाचनं यज्ञभूमियाचनम् । ब्राह्मणो राजन्यो वैश्यो दीक्षिष्यमाणः क्षत्रियं (राजानं) देवयजनं याचति. राजा तु यदहर्दीक्षिष्यमाणो भवति, तदह पूर्वाह्ण एव उद्यन्तमादित्यमुपतिष्ठेत ' इद श्रेष्ठं ज्योतिषा ज्योतिरुत्तमं ' इति ऋक् ' देव सवितर्देवयजनं मे देहि देवयज्यायै ' इति देवयजन याचति । ३४।२।१-५.

देवरातः शुनःशेपः वैश्वामित्रः आस, कापिलेयाः बाभ्रवाश्च तस्य वंश्या. अभवन् । ३३।५।२.

देवाना पत्नीः नाम ' देवाना पत्नीरुशती ' इति ऋग्द्वय आग्निमारुते शस्त्रे अहिर्बुध्न्योत्तरम् । १३।१३।१-५.

देविकाहवींषि अनूबन्ध्यापशुपुरोडाशमनु निर्वाप्याणि, धात्रे पुरोडाशं द्वादशकपाल, अनुमत्यै चरुं, राकायै चरु सिनीवाल्यै चरु, कुह्वै चरुम् । के चित्तु अनुमत्यादिचतुष्टये प्रत्येक पुरस्तात् धातारं आज्येन यजेत् इति वदन्ति, तत्र । १५ । ३ । १-१३ । देविकाहविषा देवीना हविर्भिर्विकल्पः गतश्रिय. प्रजातिकामस्य तु समुच्चयः, धनकामस्य तु न समुच्चयः

। १५।४।५-८.

देवीनां हवींषि । सूर्याय पुरोडाशमेकादशकपालं निर्वपेत्, दिवे चरुं, उषसे चरुं, गवे चरुं, पृथिव्यै चरुम् । एतेषां देविकाहविर्भिर्विकल्पः । के चित्तु चतुर्णां चरूणा पुरस्तात् प्रत्येकं सूर्यं आज्येन यजेत् इत्याहुः, तत्र । १५।४.

देशक्रमः प्रायणीयोदयनीययोः देवतानां यागेषु 'देवताः प्रायणीयायां' इत्यत्र द्र० । २१।१-१६. २।२।११-१६.

दोहकाले अग्निहोत्री धेनुः उपविशा चेत् प्रायश्चित्तं, धारयेत चेत्, स्पन्देत चेत् तेन च पयः स्कन्देत चेत् । 'अग्निहोत्रदोहकाले' इतिशब्दे द्र. । २५।२. ३२।२.

द्यावापृथिवीयः चतुर्ऋचस्त्रैष्टुभः पष्ठये षडहे पञ्चमेऽहनि वैश्वदेवशस्त्रे 'मही द्यावापृथिवी' इत्यादिः २२।२।८.

द्यावापृथिवीयः तृचो गायत्रः वैश्वदेवशस्त्रे छन्दोमप्रथमेऽहनि, 'प्रेतां यज्ञस्य शंभुवा' इति २३।२।८, १२. द्वितीयेऽहनि 'मही द्यौः पृथिवी चन' इति २३।४।१०, तृतीयेऽहनि 'प्र वां महिद्यवी अभि' इति । २४।२।११.

द्यावापृथिवीयं सूक्तं निविद्धानं अग्निष्टोमे वैश्वदेवशस्त्रे 'प्र द्यावा यज्ञैः । १३।५।७.

द्यावापृथिवीयं सूक्तं पष्ठ्ये षडहे वैश्वदेवशस्त्रे प्रथमेऽहनि 'प्र द्यावा यज्ञैः' २०।२।९, द्वितीये 'ते हि द्यावापृथिवी' २०।३।४, तृतीये 'घृतेन द्यावापृथिवी' २१।२।९, चतुर्थे 'प्र ऋभुभ्यो दूतमिव' २१।५।८, पञ्चमे 'मही द्यावापृथिवी इह (चतुर्ऋचः) २२।२।८, षष्ठे 'कतरा पूर्वा कतरा परा' २२।८।१०.

द्यौः देवता पृष्ठ्ये षडहे षष्ठेऽहनि । २२।७।१.

द्रव्यं आतिथ्यायां नवकपालः पुरोडाशः । ३।४।३.

द्रव्यं उपसत्सु आज्यहविषो भवन्ति । ४।८।३ । द्रव्यं दीक्षणीयायां आग्नावैष्णव एकादशकपालः पुरोडाशः, घृते चरुर्वा प्रतिष्ठाकामस्य । १।१।१-११.

द्रव्यं प्रायणीयोदयनीययोः अदितेश्चरुः, इतरेषा चतुर्णामाज्यम् । २।५।१३-१४.

द्रोणकलशः नाम काष्ठपात्रं सोमाधारभूतं अग्निष्टोमे । ३५।६।४.

द्वादशाहः । अहःक्लृप्तिस्तु अतिरात्रः, षडहः, छन्दोमत्र्यहः, दशममहः, अतिरात्रः इति । १९।२।१.

द्वादशाहः द्विविधः । भरतः व्यूढश्चेति । तत्र व्यूढस्य विधानं १९-२४ अध्यायेषु । तत्र षडहे प्रथममहः । २०।१-२, द्वितीयम् । ३-४, तृतीयम् । २१।१-३, चतुर्थम् ४-५, पञ्चमम् २२।१-३, षष्ठम् ४-१०, सप्तमम् । (प्रथमश्छन्दोमः) २३।१-२, अष्टमम् (द्वितीयश्छन्दोमः) ३-४, नवमम् (तृतीयश्छन्दोमः) २४।१-२, दशमम् २४।३-६.

द्वादशाहस्य अधिकारी । यजमानः भूयसीर्दक्षिणा ददत् अपापश्च । ऋत्विक्, दक्षिणाः प्रतिगृह्णन् अपापः । १९।३।१-७.

द्वादशाहस्य कालः, शैशिरयोर्मासयोर्दीक्षिताः।१९।४।-१-३ आपूर्यमाणपक्षेषु यजन्ते । १९।५।८.

द्वादशाहे दशममहः अविवाक्यं नाम । तत्र न केन चित् कस्मै चित् विवेक्तव्यं, संशये तु बहिर्वेदि स्वाध्यायप्रयोगः, अन्तर्वेदीत्येके । २४।३-६.

द्वादशाहे दीक्षा द्वादश, उपसदो सुत्याश्च द्वादश द्वादश, इति षट्त्रिंशदहोऽयम् । १९।२।१-६.

द्वादशाहे दीक्षायाः पुरस्तात् प्राजापत्यं पशुमालभेत । १९।४।४-१२.

द्वापरः । संजिहानस्तु द्वापरः । आलस्य त्यक्त्वा यदुत्थानं स एव द्वापरोनाम । ३३।३।४.

द्विदेवत्या ग्रहाः । के निदेवाः अहं प्रथमः पिबेयं अहं प्रथमः पिबेयं इत्याजिमीयुः । तेषा आजि यता वायुः प्रथमं प्रत्यपद्यत, अथेन्द्रः, अथ मित्रावरुणौ, अथाश्विनौ । तत्र इन्द्रस्तुरीयभाक् वायोर्भागास्त्रयः इति इन्द्रवाय्वोः सधिरभूत्. तेन ऐन्द्रवायवग्रहः इन्द्रतुरीयः ।९।१-६। ऐन्द्रवायवस्य पुरोऽनुवाक्ये अनुष्टुभौ, याज्ये च गायत्र्यौ इत्येके तत्र, किंतु 'वायवायाहि दर्शत, इन्द्रावायू इमे सुताः इति द्वे गायत्र्या पुरोऽनुवाक्ये, 'अग्रं पिबा मधूनां, शतेनानो अभिष्टिभिः'

इति द्वे गायत्र्यौ याज्ये ९।२।३-६। ग्रहभक्षमन्त्रः होतुः 'एष वसुः पुरूवसुरिह वसुः पुरूवसुः' इत्यादिः ९।२।३-५। पुरस्तात् प्रत्यञ्चमैन्द्रवायवं भक्षयति ८। मैत्रावरुणग्रहभक्षमन्त्रः एष वसुर्विदद्वसुरिह वसुर्विदद्वसुः' इत्यादिः ९।३।६ पुरस्तात् प्रत्यञ्चं मैत्रावरुणं भक्षयति ८। आश्विनग्रहभक्षमन्त्र. 'एष वसुः संयद्वसुरिह वसुः इत्यादिः, सर्वतः परिहारं (शिरः प्रदक्षिणीकृत्य) आश्विन भक्षयति ९।३।७-८। द्विदेवत्या एकपात्रेण गृह्यन्ते पात्रद्वयेन हूयन्ते। अध्वर्युः येन यजुषा द्विदेवत्यग्रहं प्रयच्छति, तेनैव होता प्रतिगृह्णाति ९।३।१-२। याज्याद्वय अनवानमेव पठेत्. येयजामहे इति आगूस्तु प्रथमयाज्यारम्भे एव पठितव्या, न पुनर्द्वितीययाज्यारम्भे ९।४।१।५ मैत्रावरुणप्रैषस्तु 'होता यक्षद्वायुमग्ने गा०' इत्येकः 'होता यक्षदिन्द्रवायू अर्हन्ता' इत्यादिर्द्वितीयः, प्रत्येकान्ते होतर्यज होतर्यज इति पठेत्। होतुर्वषट्कारस्तु याज्याद्वयान्ते एक एव, न द्वौ। अयं विशेष ऐन्द्रवायवे ९।४।४ सायणः। द्विदेवत्येषु अनुवषट्कारो नास्ति ९।४।२-३। द्विदेवत्यभक्षोत्तर सवनीयपुरोडाशस्य इडोपाह्वनम् ९।६।१। द्विदेवत्याना संस्रावान् होतृचमसे समवनयति। ९।६।४.

द्विपदाः अष्टाक्षरद्वादशाक्षरपादाः षष्ठेऽहनि तृतीयसवने मैत्रावरुणस्य शिल्पशस्त्रे 'अग्ने त्वं नो अन्तमः' इत्याद्याः।२९।९।११-१२.

द्विपदा. छन्दोमप्रथमेऽहनि वैश्वदेवशस्त्रे 'आ याहि वनसा सह' इति २३।२।१०। द्वितीयेऽहनि इमा नु कं भुवना' इति २३।४।१२। तृतीयेऽहनि पञ्चुरेको रिपुगः इति।२४।२-१३.

द्वितीयेऽहनि पृष्ठ्ये षडहे इन्द्रो देवता, पञ्चदशः स्तोमः, बृहत् साम, त्रिष्टुप् छन्दः। आज्यं अग्निं दूतं वृणीमहे इति। प्रउगं वायो ये ते सहस्रिण इत्यादि। मरुत्वतीयं, निष्केवल्यं, वैश्वदेवं, आग्निमारुतम्। २०।३-४.

धानुष्प्यायनो देवरातः शुनः शेपः। अधीयन देवरातो रिक्थयोरुभयोरृषिः। जह्नूना चाधिपत्ये दैवे वेदे च गाथिनाम्। ३३।६।९.

धनकामस्य देविकाहविषां देवीनां हविषा च न समुच्चयः।१५।४।७-८.

धनानि = राष्ट्राणि। ४०।३।१०.

धात्रे पुरोडाशः देविकाहविःषु, तत्र धाता ददातु दाशुषे इत्यनुवाक्या, धाता प्रजाना इति याज्या। १५।३।११ सायणः।

'धानाः भृष्टाः यवतण्डुलाः। सवनीयपुरोडाशेषु प्रथम हविः। तत्र याज्या हरिवां इन्द्रो धाना अत्तु इति। ८।६।१-६.

धाय्या निष्केवल्ये शस्त्रे अग्निष्टोमे माध्यंदिने 'यद्वावान इति। नीचैस्तरामिव शंस्तव्या। १२।११। १-११; १२।१३।५-८.

धाय्या निष्केवल्ये शस्त्रे पृष्ठ्ये षडहे प्रत्यहं, छन्दोमेषु च प्रत्यहं यद्वावान इति। २०-२४ अध्यायेषु उक्तमिदम्.

धाय्याभिरेव इमाँल्लोकान् धयति यंयं कामं कामयते। याभिः काम धयति सा धाय्या। यत्रयत्र वै देवा यज्ञस्य च्छिद्रं निरजानन् तद्धाय्याभिरपिदधुः तद्धाय्यानां धाय्यात्व। दधाति अपिदधाति आभिः वा धाय्याः। एताभिर्यज्ञस्य छिद्रं संदधदेति. आभिः दधाति सदधाति वा धाय्याः। १२।७।३-४, ६.

धाय्याः मरुत्वतीये शस्त्रे अग्निर्नेता भग इव क्षितीनां इति आग्नेयी त्रिष्टुप्, त्वं सोम क्रतुभिः सुक्रतुर्भूः इति सौम्या त्रिष्टुप्, पिन्वन्त्यपो मरुतः सुदानवः इति वैष्णवी त्रिष्टुप्। तान्वो महे इति तृतीया केचित् तत्र। एता अग्निष्टोमे १२।७।१-१४, पृष्ठ्ये षडहे प्रत्यहं छन्दोमेषु च प्रत्यहम्। २०-२४ अध्यायेषु.

धाय्या महाव्रते निष्केवल्यस्य। पुच्छे यद्वावान इति ऐआ. १।१८।१०; ५।८।२०.

धाय्या याज्याश्च प्रकृतौ विकृतौ च समानौ एव। १२।७।४.

धाय्या वैश्वदेवशस्त्रे आर्भवे सूक्ते आदौ सुरूपकृत्नुमूतये इति, अन्ते च येभ्यो माता एवा पित्रे इति द्वयोः शंसनोत्तरं अयं वेनश्चोदयत् इति। १३।६।-२४.

धाय्याः सामिधेनीषु महाव्रते त्रिवृत्सनश्चोदकमानाः

पृथुपाजा अमर्त्यः इत्यादयः षट्, गवामयेन मध्यमेऽहनि च । ऐआ. ५।१।२ सायणः ।

धाय्या सामिधेनीष्विव शस्त्रेऽपि आधिक्यत्वेन प्रक्षेपणीया ऋक् ऋचौ ऋचः शस्त्रावयवः । १२।१२।७.

धाय्यास्थानं सामिधेनीषु समिध्यमानो अध्वरे, समिद्धो अग्न आहुतः इत्यनयोर्मध्यम् । ऐआ ५।१।२ सायणः ।

धियावसुः = धिया बुध्या वसति आच्छादयति इति, बुद्धिप्रदा इत्यर्थः । इति सरस्वती एव धियावसुः । ऐआ. १।४।१७.

धिष्ण्यशस्त्रं शिल्पं शस्त्रं षष्ठेऽहनि तृतीयसवने मैत्रावरुणस्य नाभाकास्तृचाः।२९।८।१–३। शिल्पं ।४। वालखिल्यानां पच्छो विहरणं ।५। वाचःकूटः ।५। एकपदाः ।६। महानामनानि पदानि ।७। अर्धर्चशः विहरणं वालखिल्यानां ।८। ऋक्शः विहरणं ।९। विहरणप्रशंसा ।१०। चतुर्थे शस्त्रे अविहृतं यथापाठं, परंतु अष्टमं सूक्तं सप्तमत्वेन सप्तमं चाष्टमत्वेन शसनीयं इति विपर्ययः कार्यः।११–१२। शिल्पशस्त्रप्रशंसा। १६। दूरोहणं हंसवत्या ऋचा ।२९।९।१–७। ऐन्द्रावरुणं सूक्तं 'आ वां राजानौ' इति ।२९।१०।१ १०। स्तोत्रे द्विपदाः अष्टाक्षरद्वादशाक्षरपादाः ' अग्ने त्वं नो अन्तमः ' इत्याद्याः ।११–१२। याज्या ऐन्द्रावरुणी ' इन्द्रावरुणा मधुमत्तमा' इति । १३–१४.

धिष्ण्यात्- होतृधिष्ण्यात् पदमात्रे प्रदेशः अवस्थापनीयः महाव्रते । ऐआ. ।५।३।१२.

धिष्ण्येषु, अग्निविहरणं आग्नीध्रादेव अग्निष्टोमे । १०।४।२.

नराशंसपङ्क्तिः = द्विनाराशंसं प्रातःसवनं, द्विनाराशंसं माध्यंदिन सवनं, सकृन्नाराशंसं तृतीयसवनं, इति अग्निष्टोमे । ८।६।३.

(नवस करणे पुत्राकरितां)—■ ( हरिश्चन्द्रः ) वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वा यजे इति । तस्य पुत्रो जज्ञे रोहितो नाम । ३३।२।१-२.

नानदं षोळशी साम अविह्वते ' प्रत्यस्मै पिपीषते ' इत्यस्यामृचि उत्पन्नम् । १६।२।२–४.

नापुत्रस्य लोकोऽस्तीति तत् सर्वे पशवो विदुः । तस्मात्तु पुत्रो मातरं स्वसारं चाधिरोहति । ते मात्राऽपि मिथुनीभवन्ति । तस्मात् पुत्र आवश्यक इति भावः । नारदो हरिश्चन्द्रमुवाच । ३३।१।१२-१३.

नाभाकाः तृचाः षष्ठेऽहनि धिष्ण्यशस्त्रे । मैत्रावरुणस्य ' यः ककुभो निधारयः ' इति तृचः । ब्राह्मणाच्छंसिनः 'पूर्वीष्ट इन्द्रोपमातयः' इति तृच. । अच्छावाकस्य ता हि मध्यंभराणा इति तृचः । २९।८।१-३.

*नाभानेदिष्ठस्य सत्यवस्तुः कथा* । २२।९.

नाराशंसीः तिस्रः कुन्तापसूक्ते प्रमाहं पञ्चः, निनर्द्य, ' इदं जना उपश्रुत ' इत्याद्याः । ३०।६।३-६.

नाशप्रायश्चित्तं, उपशान्तिप्रायश्चित्तं ' गार्हपत्ये ' इत्यत्र द्र० । ३२।४।८. ३२।७।४.

निदानं सूत्रस्य ऊर्ध्वस्य । ६।१।२.

निधनं नाम सामावयवः अन्तिमः ■ सर्वैर्गातव्यः । १२।१२।४ सायणः ।

निनर्दः कारव्यासु कुन्तापसूक्ते षष्ठेऽहनि । ३०।६, १६-१८.

निनर्द- नाम तृतीयपादस्य प्रथमाक्षरमनुदात्तं द्वितीयाक्षरमुदात्तं इति शसन ( वृषभो यथा रोरवीति तथा ) । ३०।६।६ सायण. ।

निनर्दः नाराशंसीषु ।३०।६।३-६। पारिक्षितीषु । १० १५। रैभीषु । ३०।६।७ ९.

नियमविशेषः दीक्षितस्य दीक्षाया, दीक्षितविमितात् बहिर्गमनाभावः कदाचिद् गमने, सूर्योदये सूर्यास्तमये च स्वस्थाने एव स्थातव्यं, अन्यैश्च शासनीयो दीक्षितः ।१।३।१२-१४.

*निर्भुजपाठः नाम संहितापाठः* । ऐआ. ३।३।१-६.

निर्भुजप्रवादः संहितोपासकाः । ऐआ. ३।३।१.

निर्वापः प्रायणीयायाः निष्कासे स्थाल्यां वा उदयनीयानिर्वापः । २।५।७-८.

निविन्ठंसकृत्य अर्धं दद्यात् । ११।११।३.

*निवित्* ' अस्य मदे जरित- ' इत्यादिः षोडशपदा ( ११।१ १६ निविदध्यये ) षोडशिशस्त्रे उत्तमे तृचे उत्तमामृच विहृता धीयते । १६।१।५.

निवित् इन्द्रो देवः इति नि'देवस्ये महाव्रे ।

तासामादौ शोंऽऽऽसावोऽऽऽम् इत्याहावः । ऐआ. ५।५।२०.

निवित् एकर्चे ऋग्द्वयात्मके वा सूक्ते न दध्यात् । ११।११।९.

निवित्प्रशंसा ।१०।१।५-८.

निवित्सूक्तयोः शंसने अभिचारार्थं विशेषः । १०।१।२-३.

निविद् आग्नेये सूक्ते आग्निमारुते शस्त्रे अग्निष्टोमे तृतीयसवने ( १०।१-१६ ), द्वितीये आग्नेयसूक्ते च । ( ८।१-१५ ) प्रयोगे।

निविदः आज्यशस्त्रे अग्निष्टोमे प्रातःसवने ( ३।१।१४ ) माध्यंदिने निष्केवल्यशस्त्रे ( ३।१-२० ) मरुत्वतीये शस्त्रे 'जनिष्ठा उग्र' इतिसूक्ते पञ्च सूचा मुपरिष्टात् ( २।१-२० ) पुनश्च पञ्च ऋच । तृतीय सवने वैश्वदेवशस्त्रे द्यावापृथिवीये सूक्ते (५।१ ५) प्रयोगे।

निविदः द्वादश पदानि अग्निष्टोमे आज्यशस्त्रे । १०।२।१-१२.

निविदः पञ्च. शस्यन्ते । ११।११।२.

निविदः पद नातीयात् ( न परित्यजेत् ) ।११।११। ४ ५.

निविदः पदे न विपरिहरेत् ( विपर्यासो न कार्यः ) । ११।११।६.

निविदः पदे न समस्येत् ( वाक्यद्वय न संक्षयेत् ) । ७। मेद मक्ष मेदं सन' एते एव तु पदे ( वाक्यद्वय ) समस्येत् । ८

निविदः मारुते सूक्ते आग्निमारुतशस्त्रगते ( ९।१-१४ ), वैश्वदेवसूक्ते वैश्वदेवशस्त्रगते ( ७।१--२० )। प्रयोगे।

निविद स विधे सूक्ते वैश्वदेवशस्त्रगते सविता देव. सोमस्य पिबतु ( ४।१।-२० निविदध्याये ) इति। ११।५।९.

निविद्धान तृचे चतुर्ऋचे ( अधिकेऽपि ) कर्तव्य न्यूने तु न कर्तव्यम् । ११।११।९। निविद्धान प्रात.-सवने शस्त्राणां पुरस्तात्. माध्यंदिने मध्ये, तृतीयसवने तु अन्ते एकामृचं शिष्ट्वा । ११।१०-११.

निविद्धानं सूक्तं 'अभि त्य मेषं' इति जागत, निष्केवल्यशस्त्रे छन्दोमप्रथमेऽहनि अन्तिमम् । २३।२।३-५.

निविद्धान सूक्त 'अभूदेवः सविता' इति सावित्रं वैश्वदेवशस्त्रे । प्रयोगे।

निविद्धान सूक्त 'अह भुव वसुनः पूर्व्य' इति जागतं । छन्दोमतृतीयेऽहनि निष्केवल्येशस्त्रे ।२४।२।६.

निविद्धान सूक्त 'आ न इन्द्रो दूरात्' इति पृष्ठ्ये षडहे प्रथमेऽहनि निष्केवल्ये शस्त्रे । २०।२।१.

निविद्धानं सूक्तं 'आ नो भद्राः क्रतवः' इति वैश्वदेव वैश्वदेवशस्त्रे । प्रयोगे।

निविद्धान सूक्त 'आ याहिन्द्र.' इति पृष्ठ्ये षडहे प्रथमेऽहनि मरुत्वतीये शस्त्रे । २०।१।१.

निविद्धान सूक्तं.'आ नो भद्राः क्रतवः' इति वैश्वदेव वैश्वदेवशस्त्रे । प्रयोगे।

निविद्धान सूक्त 'आ याहिन्द्रः इति पृष्ठ्ये षडहे प्रथमेऽहनि मरुत्वतीये शस्त्रे । २०।१।१२.

निविद्धान सूक्त इन्द्रस्य नु वीर्याणि' इति, तत्रान्त्या परिधानीया, निष्केवल्य शस्त्रे । प्रयोगे।

निविद्धान सूक्त 'इन्द्रस्य नु वीर्याणि' इति पञ्चदशर्चं हैरण्यस्तूप निष्केवल्ये शस्त्रे, तच्च प्रतिष्ठिततमया वाचा शस्तव्य ( भ्राढेन ध्वनिना-सायणः । धीरगंभीर दमदार स्वरानें—वेंकट ) १२।११।१०-१३.

निविद्धान सूक्त 'जनिष्ठा उग्रः' इति पञ्चदशर्चं महाव्रते मरुत्वतीये शस्त्रे । ऐआ. १।६।१७.

निविद्धान सूक्त 'जनिष्ठा उग्रः' इति गौरिवीत शास्त्र मैतुमं अग्निष्टोमे मरुत्वतीये शस्त्रे, तस्य अर्धाः ( पद् ) शाखा अर्धाः ( पञ्च ) परिशिष्य मध्ये निविदं दधाति 'आत्ममनात इव ( डोंगरावर चढनाना मध्ये्या मार्गे ) शंसन् । १२।८।२-७.

निविद्धान सूक्त 'तद्धन् स्य सुहन' इति आर्भव अग्निष्टोमे वैश्वदेवे शस्त्रे । प्रयोगे।

निविद्धानं सूक्त 'तमस्य द्यावा' इति जागतं छन्दोमद्वितीयेऽहनि मरुत्वतीये शस्त्रे । २३।३।१६-२०

निविद्धानं सूक्तं 'त्यं सुमेषं महया' इति जागत छन्दोमप्रथमेऽहनि मरुत्वतीये शस्त्रे। २३।१।१७-१९.

निविद्धानं सूक्तं 'दिवश्चिदस्य वरिमा' इति जागतं छन्दोमद्वितीयेऽहनि निष्कैवल्येशस्त्रे। २३।४।२ ७.

निविद्धानं सूक्तं निविदं विना न पठेत्। विस्मरणे ■ अन्यत् तद्दैवत्यं तच्छन्दस सूक्तमाहृत्य तस्मिन् निविदं दध्यात्। आहृतात् सूक्तात् प्राक् 'मा प्रगाम पथो वय' इति तृचं सूक्तं पठेत्। सैव तत्र प्रायश्चित्तिः। २१।११।१२-२२.

निविद्धानं सूक्तं 'प्रतव्यसीं नव्यसीं' इति आग्नेयं अग्निष्टोमे आग्निमारुते शस्त्रे। प्रयोगे।

निविद्धानं सूक्तं 'प्रत्वक्षसः प्रतवसः' इति मारुतं अग्निष्टोमे आग्निमारुते शस्त्रे। प्रयोगे।

निविद्धानं सूक्तं 'प्र द्यावा यज्ञैः' इति द्यावापृथिवीयं अग्निष्टोमे वैश्वदेवे शस्त्रे। प्रयोगे।

निविद्धानं सूक्तं 'प्रत्वक्षसः प्रतवसः' इति मारुतं अग्निष्टोमे आग्निमारुते शस्त्रे। प्रयोगे।

निविद्धानं सूक्तं 'प्र द्यावा यज्ञैः' इति द्यावापृथिवीयं अग्निष्टोमे वैश्वदेवे शस्त्रे। प्रयोगे.

निविद्धानं सूक्तं 'प्र मन्दिने पितुमत्' इति जागतं छन्दोमतृतीयेऽहनि मरुत्वतीयशस्त्रे। २४।१।१७-१८.

निविद्धानं सूक्तं 'यो जात एव प्रथमः' इति पृष्ठ्ये षडहे तृतीयेऽहनि निष्कैवल्ये शस्त्रे। २१।२।१-५.

निविद्धानं सूक्तं 'यो जात एव प्रथमः' इति पृष्ठ्ये षडहे तृतीयेऽहनि निष्कैवल्ये शस्त्रे। २१।२।१-५.

निविद्धानं सूक्तं 'वैश्वानराय पृथुपाजसे' इति अग्निष्टोमे आग्निमारुते शस्त्रे। प्रयोगे।

निविद्धानः तृचः 'अयं ह येन वा इदं' इति गायत्रः पृष्ठ्ये षडहे षष्ठेऽहनि मरुत्वतीये शस्त्रे पर्यासः। २२।७।१२-१३.

निविद्धानः तृचः 'इमं नु मायिनं हुवे' इति गायत्रः पृष्ठ्ये षडहे चतुर्थेऽहनि मरुत्वतीये शस्त्रे पर्यासः। २१।४।१६-१८.

निविद्धानः तृचः 'उप नो हरिभिः सुतं' इति गायत्रः पृष्ठ्ये षडहे षष्ठेऽहनि निष्कैवल्ये शस्त्रे पर्यासः। २२।८।५-६.

निविद्धानः तृचः 'तमिन्द्रं वाजयामसि' इति गायत्रः पृष्ठ्ये षडहे पञ्चमेऽहनि निष्कैवल्ये शस्त्रे। २२।३।४-५.

निविद्धानः तृचः 'त्यमु वः सत्रासाहं' इति गायत्रः पृष्ठ्ये षडहे चतुर्थेऽहनि निष्कैवल्ये शस्त्रे। २१।५।४-५.

निविद्धानः तृचः 'मरुत्वाँ इन्द्र मीढ्वः' इति पृष्ठ्ये षडहे पञ्चमेऽहनि मरुत्वतीये शस्त्रे। २२।३।१०-१४.

निविद्‌विधिः। १०।२।१-८; ३।१-१२.

निष्कासे स्थाल्या वा प्रायणीयायाः, उदयनीयानिर्वापः। २।५।७

निष्कैवल्यं शस्त्रं अग्निष्टोमे। आख्यायिका, माध्यंदिने सवने, माहेन्द्रः ग्रहः, त्रिष्टुप् छन्दः, पृष्ठं साम। १२।१७। २-४। धाय्या 'यद्वावान' इति, शत्रुसेनाजयार्थः प्रयोगः, याज्या 'पिबा सोम' इति, आभिचारप्रयोगः १२।११।१-१०। आख्यायिका स्तोत्रियतृचार्थां, सामशस्त्रप्रशंसा १२।१२।१-८। स्तोत्रियः 'आभ त्वा शूर' इति। तं मध्यमया वाचा शंसति, अनुरूपः 'अभि त्वा पूर्वपीतये' इति स उच्चैस्तरामिव शंस्तव्यः, धाय्या 'यद्वावान' इति सा नीचैस्तरामिव शंस्तव्या, प्रगाथ 'पिबा सुतस्य रसिनः' इति ■ स्वरवत्या वाचा शंस्तव्यः, निविद्धानं सूक्तं 'इन्द्रस्य नु वीर्याणि' इति पञ्चदशर्चे हैरण्यस्तूपं तत् प्रतिष्ठिततमया वाचा शंस्तव्यम्. तत्र आद्यौ (१-८) ऋचः ततो निविदः (३।१-२०) ततः सूक्तशेषः (९-१५ पञ्चदशी परिधानीया। प्रयोगः।

निष्कैवल्यं शस्त्रं क्षत्रिययज्ञे। प्रतिपत् प्रगाथः 'त्वामिद्धि हवामहे', अनुरूपः प्रगाथः 'अभित्वा-शूर', धाय्या 'यद्वावान'। सामप्रगाथ. 'उभयं शृणवच्च', निविद्धानं सूक्तं 'तमुष्टुहि यो अभि' पञ्चदशर्चं भारद्वाजम्। १६।२।२ ५.

निष्कैवल्यं शस्त्रं छन्दोमप्रथमेऽहनि। प्रतिपत्तृचः बृहतः स्तोत्रियः 'त्वामिद्धि हवामहे', अनुचरस्तृचः 'त्वं ह्येहि चेरवे,' धाय्या यद्वावान, रथंतरस्य योनिः

'अभि त्वा शूर'। सामप्रगाथ 'पिबा सुतस्य', तार्क्ष्य सूक्त 'त्यमू षु वाजिनम्, सूक्त' त्रैष्टुभ 'इन्द्रस्य नु वीर्याणि', निविद्धान जागत सूक्त 'अभित्य मेषम्'। २३।१।२० २९, २

निष्केवल्य शस्त्र उदामद्वितीयेऽहनि । प्रतिपत् प्रगाथ रथतरस्य स्तोत्रिय 'आ त्वा शूर', अनुचर प्रगाथ रथतरस्यानुरूप 'अभि त्वा पूर्व', धाय्या यद्वावान, प्रगाथ बृहतो योनि 'त्वामिद्धि हव महे,- सामप्रगाथ 'उभय शृणवच्च', तार्क्ष्य सूक्त 'त्यमू षु वाजिनम्, सूक्तचतुष्ट्य त्रैष्टुभ 'अपूर्व्या पुरुतमा' 'तां सु ते कीर्ति' 'त्व महाँ इन्द्र यो ह', 'त्व महाँ इन्द्र तुभ्यम्', निविद्धान जागत सूक्त 'दिवश्चिदस्य वरिमा'। २३।३।२१ २५, ४।१ ७

निष्केवल्य शस्त्र छन्दोमतृतीयेऽहनि । प्रतिपत् तृच बृहत स्तोत्रिय 'त्वामिद्धि', अनुचरतृच बृहतोऽनुरूप 'त्व ह्येहि चेरवे', धाय्या 'यद्वावान', प्रगाथ रथतरस्य योनि 'अभि त्वा शूर, सामप्रगाथ 'इन्द्र त्रिधातु शरणम', तार्क्ष्य सूक्त 'त्यमू षु वाजिनम्', सूक्तानि चत्वारि त्रैष्टुभानि 'सचेव जन्तु' 'कदा भुवन् रथक्षयाणि' 'आ सत्यो यातु मघवान्' 'तत्तदिन्द्रिय परमम्', निविद्धान जागत सूक्त 'अहं भुव वसुन'। २४।१। २१ २२, २।१ ६

निष्केवल्य शस्त्र पृष्ठ्ये षडहे प्रथमे हनि । प्रतिपत् प्रगाथ 'अभि त्वा शूर', अनुचर प्रगाथ 'अभि त्वा पूर्व', धाय्या 'यद्वावान', सामप्रगाथ पिबा सुतस्य', तार्क्ष्य सूक्त 'त्यमू षु वाजिनम्', निविद्धान सूक्त 'आ न इन्द्रो दूरात्'। २०।१।१३-१७, २।१

निष्केवल्य शस्त्र पृष्ठ्ये षडहे, द्वितीयेऽहनि । प्रतिपत् तृच त्वामिद्धि, अनुचरतृच 'त्व ह्येहि चेरवे,' धाय्या 'यद्वावान,' सामप्रगाथ उभय शृणवच्च, तार्क्ष्य सूक्त 'त्यमू षु वाजिनम्,' सूक्त 'या त ऊतिरवमा । २०।३। ११।१४, ४।१.

निष्केवल्य शस्त्र पृष्ठ्ये षडहे तृतीयेऽहनि । प्रतिपत् प्रगाथ 'यद् द्याव इन्द्र ते', अनुचर प्रगाथ 'यदिन्द्र यावतः त्वम्', धाय्या 'यद्वावान', प्रगाथ रथतरस्य योनि 'अभि त्वा शूर', सामप्रगाथ 'इन्द्र त्रिधातु शरणम्', तार्क्ष्य सूक्त 'त्यमू षु वाजिनम्', निविद्धान सूक्त सजनीय गार्त्समद 'यो जात एव प्रथम'। २१।१ १८ २२ २।१ ५

निष्केवल्य शस्त्र पृष्ठ्ये षडहे चतुर्थेऽहनि । प्रतिपत् तृच 'पिबा सोममिन्द्र', अनुचरतृच 'श्रुधी हव विपिपानस्य' धाय्या 'यद्वावान', प्रगाथ बृहतो योनि 'त्वामिद्धि', सामप्रगाथ 'त्वामिन्द्र प्रतूर्तिषु', तार्क्ष्य सूक्त 'त्यमू षु वाजिनम्', सूक्त न्यूङ्खसहित 'वृष श्रुत इन्द्र', सूक्त त्रैष्टुभ 'युध्मस्य ते वृषभस्य', तृच पर्यास 'त्यमु व सत्रासाहम्' । २१।४।१९ २४, ५।१-१

निष्केवल्ये शस्त्र पृष्ठ्य षडहे पञ्चमेऽहनि । प्रतिपत् महानाम्न्य नाम 'विदा मघवन् विदा' इत्याद्य, अनुचर तृच 'स्वादोरित्था (१ १) 'उप नो हरिभि' (१ ३), 'इन्द्र विषा अवीवृधन्'(१-३) धाय्या 'यद्वावान', प्रगाथ रथतरस्य योनि 'अभि त्वा शूर', सामप्रगाथ 'मो षु त्वा वाघत, तार्क्ष्य सूक्त 'त्यमू षु वाजिनम्', सूक्त पाङ्क्त 'प्रेद ब्रह्म वृत्रतूर्ये', 'इन्द्रो मदाय वावृधे', सूक्त त्रैष्टुभ 'सत्रा मदासस्तव', तृच पर्यास 'तमिन्द्र वाजयामसि' । २२।२।१-९, ३।१ ५

निष्केवल्य शस्त्र पृष्ठ्ये षडहे षष्ठेऽहनि । प्रतिपत् तृच 'रेवतीर्न सध', अनुचरतृच 'रेवा इन्द्रेवत', धाय्या यद्वावान', प्रगाथ बृहतो योनि 'त्वामिद्धि', सामप्रगाथ 'इन्द्रमिद्देवतातये', तार्क्ष्य सूक्त 'त्यमू षु वाजिनम्', सूक्त पारुच्छेप 'इन्द्र याहुप न', सूक्त 'प्रघा न्वस्य महत ,' 'सूक्त त्रैष्टुभ 'अभूरेको रयिपते', तृच पर्यास निविद्धान गायत्र 'उप नो हरिभि सुतम्' २२।७।१४ १८, १८।१ ६

निष्केवल्य शस्त्र महाव्रत । त्रैष्टुभ । हिंकार प्रारम्भ । मध्याह्न ऊनवन्। व्याहाव । प्रतिपत् 'तदिदास भुवनेषु' 'वातृधान शवसा' गु-ह-न इत्यक्षराणि प्रतिपदि प्रथमद्वितीयचतुर्थपादा तेषु प्रक्षेपणीयानि, 'त्व मनुमहि गृणन्ति', 'तद् व ओदतीना' इति मिश्रगीया

ऋक् । आत्मा–'तदिदास' नवर्चं त्रिः प्रथमा, 'ता सुते' षडर्चं, 'भूय इद् वावृधे' पञ्चर्चं, 'नृगामु त्वा तृचः इति पञ्चविंशतिऋगात्मक.' सूददोहाश्च 'ता अस्य सूददोहसः' इति । ग्रीवाः–'ग्रीवाः' इति शब्दे द्र० । शिरः–'शिरः' इति शब्दे द्र० । निजनाः 'विजन' इति शब्दे द्र० । पक्षः दक्षिणः, पक्ष. उत्तरः, पुच्छ, अधीतयः, गायत्री तृचाशीतिः, एते पदार्था. तत्र तत्र शब्दे द्र० । बार्हती तृचाशीति. 'मा चिदन्यद्विशंसत' इति एकयानत्रिंशत् (२९ ऋच.), 'पिबा सुतस्य रसिन.' इति त्रिंशतेः सप्तमीं चाष्टमीं चोद्धरति, 'यदिन्द्र प्राग पागुदक्' इति चतुर्दश (ऋच.) 'वय घ त्वा सुतावन्तः' इति पञ्चदश, 'मो षु त्वा वाघतश्चन' इत्येतस्य (सूक्तस्य 'रायस्काम.' इति–) द्विपदां चोद्धरति ('अभि त्वा शूर' इति) राथतरं च प्रगाथ, अथ ह्यस्य 'नकिः सुदासो रथ' इत्येत प्रगाथमुध्दृत्य तत्स्थाने 'त्यामिदा ह्यो नरः' इत्येत प्रगाथ प्रत्यवदधाति, 'अभि प्र वः सुराधस' इति षड् वाल खिल्यानां सूक्तानि, 'य सत्राहा विचर्षणि' इति शेषः (१२ ऋचः), 'अय ते अस्तु हर्यत.' इति सूक्ते (द्वे) 'उभयं शृणवश्च नः' (इति सूक्त, तत्र) सप्तमीं चाष्टमीं चोद्धरति, 'तरोभिर्वो विदद्वसु' इति (सूक्त तत्र) उत्तमामुद्धरति, 'यो राजा चर्षणीना' इत्येकादश, 'त वो दस्ममृतीषह' (इति सूक्त), 'आ नो विश्वासु हव्यः' (इति सूक्त), 'या इन्द भुज आभर' इति नव (ऋच), सूददोहा (ता अस्य सूददोहस. इति ऋक्)।" सेव बार्हती तृचाशीतिः ॥ अथ औष्णिही तृचाशीतिः 'औष्णिही' इति शब्दे द्र० । वशा (उदर) 'वशः'' इति शब्दे द्र० । ऊरू–ऊरुशब्दे द्र० । उक्थसम्पद्–जप, उक्थदोह–नरः ; तत्र तत्र शब्दे द्र० । अथ तु होता उक्थदोह वाचयति, अध्वर्युं स्वयं वा पठति । 'ओगुक्थशा यज सोमस्य' इति इत्यायै संप्रेषिः 'ये यजामहे' इत्यागूर्य नित्य येन ('पिबा सोममिन्द्र इति') यजति । अथानन्येन अनुवषट्करोति । वषट्काराग्नुमन्त्रण (वागोज इत्यादि प्रकृतिवत्) । भक्षप्राप्तो होता प्राङ् प्रेङ्खादवरोहति । अथैत प्रेङ्खं प्रत्यञ्चमवनभन्ति यथा शंसितार भक्षयिष्यन्त नोपहानिष्यति । प्रेङ्खस्यायतनमासीनो होता इतराज्ञापूर्वक 'वाग्देवी सोमस्य०' इति मन्त्रजपेन भक्षयति । ऐआ. १।७-२१, ५।३-१३.

निष्केवल्य शस्त्र महाव्रते प्रेङ्खमारुह्य शस्यते । ऐआ. १।७।१ सायणः ।

निष्केवल्यशस्त्रस्य पञ्चमेऽहनि स्तोत्रिय 'विदा मघवन् विदा' इत्यादिः । ऐआ. ४।१।१-९.

निष्केवल्यशस्त्रे अभिचारप्रयोगः । अविराजा (विराट्छन्दोभिन्नेन) अस्य यजेत् गायत्र्या वा त्रिष्टुभा वा अन्येन वा छन्दसा ।१२।११ १०.

निष्केवल्यशस्त्रे गायत्री बार्हती औष्णिही च तृचाशीति, प्रत्येकान्ते सूददोहाश्च, महाव्रते । ऐआ. १।१९।१-४.

निष्केवल्यशस्त्रे निवित् 'इन्द्रो देवः' इत्यादिः महाव्रते । ऐआ ५।५।१०.

निष्केवल्यशस्त्रे निविद्धान सूक्त 'आ न इन्द्रो दूरात्' इति सपातो नाम । २०।२।२.

निष्केवल्यशस्त्रे प्रतिगर. अविकृत प्राकृत एव । ऐआ. ५।६।१०.

निष्केवल्यशस्त्रे बृहद्दिव नाम 'तदिदास भुवनेषु' इति सूक्तम् । तच्च महाव्रतवत् चतुर्थीशे गवामयनस्य द्वितीयेऽहनि शस्तव्यम् । १७।८।१–२.

निष्केवल्यशस्त्रे स्तोत्रियोत्तर पुरीषपदानि नाम मन्त्रा पञ्चमेऽहनि । 'पुरीषपदानि' इति शब्दे द्र० । ऐआ. ४।३।१०–१५.

निष्केवल्यशस्त्रोपक्रमात् प्राक् अध्वर्यव पिच्छोला अपाघाटलिकादीना (वाद्याना) शब्दान् कारयन्ति महाव्रते । ऐआ. ५।५।११.

निष्केवल्ये आहाव. त्रिरेव । त्रय आहावाः शस्त्रादेः, निविद, परिधानीयाया इति महाव्रते । ऐआ. ५।५।१०.

निष्केवल्ये त्रिष्टुप्सहस्रमेके, जगतीसहस्रमेके, अनुष्टुप्सहस्रमेके । ऐआ. २।१७।१.

निष्केवल्ये प्रतिपत् राजनसामस्तोत्रिय एव महा-

मते । ऐआ. ५।५।१३; ६।७–९.

निष्केवल्ये याज्या 'ओमुक्थशा यज सोमस्य' इति संप्रेषिते 'ये यजामहे' इत्यागूर्य 'पिबा सोममिन्द्र' इति अनवान वषट्कारश्च । वषट्कारानुमन्त्रणं 'वागोजः' इत्यादि प्राकृतमेव महाव्रते । ऐआ ५।१३।७–८.

निष्केवल्योत्तरं उक्थसंपत् नाम मन्त्रस्य जपो होतुः महाव्रते । ऐआ. । ५।१२।३.

निष्केवल्योपासकस्य परकीययागे निष्केवल्यशासनस्य चयनस्य महाव्रतस्तोत्रमहाव्रतशस्त्रानुष्ठानस्य च निषेध. । पित्रे आचार्याय वा शंसेत्, तत्र न निषेधः । ऐआ. ३।१०।१–६.

निष्केवल्योपासना प्राणदृष्ट्या । अहमहोऽत्र । अधिदैवत अध्यात्म च । इदमेव स्थूलदेहरूपेण उक्थोपासनम् । ऐआ. २।४–२०.

निह्नवः = नमस्कारविशेषः अग्निष्टोमे । दक्षिणेन वेद्यन्ते प्रस्तरं निधाय दक्षिणान् पाणीन् उत्तानान् कृत्वा सव्यान् नीचः । ( कृत्वा न्युब्जान् ) तत्र, एष्टा राय एष्टा वामानि प्रेषे भगाय । ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्यै' इति प्रस्तरे निन्हुवते । ४।९।५.

निष्टर्क्यः ग्रन्थिः = शिलाबन्धनवत् सहसा मोचयितुं शक्यत्वं निष्टर्क्यत्वम् । ऐआ ५।३।८ सायणः ( दुरगाट ) ।

नेष्ट उपस्थेः आसीनः आग्नीध्र पात्नीवतग्रहस्य भक्षयति । २६।३।१०–११.

नेष्टुः दक्षिण दोः पशुभागः । ३१।१।२.

नेष्टुः प्रात.सवने प्रस्थितयाज्या 'अग्ने पत्नीरिहावह' इति । २८।२।४। माध्यंदिने 'तवायं सोम' २८ । ३ । ११ । तृतीयसवने 'अमेव नः सुहवा' । २८।४।१०.

नैयग्रोधफलानि चमसे पात्र्या वा समोप्यानि ऐन्द्रमहाभिषेके संभारः । ३९।२।१-२.

नौधसशामयोनिः 'इमनिन्द्र सुत पिब' इति १९।-।६ सायणः ।

न्यग्रोधः ( वटवृक्ष ) न्युब्जः कुरुक्षेत्रे प्रथमम्उत्पन्न. तेभ्यो ह्यन्ये अधिजाताः । न्यग्रोहः = न्यग्रोधः । ३५।४।३–४.

न्यूङ्खः अच्छावाकशस्त्रे एवयामरुते षष्ठेऽहनि । ३०।४.

न्यूङ्खः आहनस्यासु षष्ठेऽहनि । ३०।१०।७.

न्यूङ्खः । नितरा विषमप्रकारेण ऊङ्खनं उच्चारणम् । द्वितीयं स्वरं ओकारं त्रिमात्र उदात्तं त्रि', तस्य तस्य चोपरिष्टात् अपरिमितान् पञ्च वा अर्धौकारान् अनुदात्तान्, उत्तमस्य ॥ त्रीन् । पूर्वमक्षरं निहन्यते न्यूङ्ख्यमाने ( आश्वला ७।११।१–७ )। मन्त्रादौ चत्वार्यक्षराणि उच्चार्य न्यूङ्खो वक्तव्यः । सोऽयं चतुरक्षरेण इत्येकः पक्षः । त्र्यक्षरेण एकाक्षरेण इति च पक्षौ द्व्यक्षरेण इति सिद्धान्तः । २१ । ३ । १–९। चतुर्थेऽहनि निष्केवल्यशस्त्रे 'कुह श्रुत इन्द्रः' इति वैमदे सूक्ते माध्यंदिनीयत्वात् प्रथमे पादे न्यूङ्खः। २१।५।१ । चतुर्थेऽहनि प्रातरनुवाकप्रतिपदि अर्धर्चाग्नोर्न्यूङ्खः ( आश्व ७ । ११ । १–७ ) प्रातरनुवाके प्रथमे पादे न्यूङ्खः, आज्यशस्त्रे तृतीयपादे उत्तमावर्जं, माध्यंदिने प्रथमे पादे चतुर्थेऽहनि पृष्ठ्ये षडहे । २१ । ३ ।१–९ वृषाकपिसूक्ते ब्राह्मणाच्छंसिशस्त्रे षष्ठेऽहनि न्यूङ्खः । ३० । ३.

पक्ष• उत्तर• निष्केवल्यशस्त्रस्य पक्षित्वेन कल्पि तस्य महाव्रते । तस्य असौ लोक., आदित्यः, मनः, बृहत् साम, भरद्वाजः, शतसंख्या, इति षड् वीर्याणि । ऐआ १।१८।२। बार्हत उत्तरः पक्षः । ऐआ ५।८।४. स्तोत्रियः प्रगाथः बार्हतः त्वामिद्धि हवामहे, अनुरूपः प्रगाथो बार्हतः 'त्व रमेहि चेरवे,' पञ्चदशर्चं सूक्त 'तमु ष्टुहि यो अभि', दशर्चं सूक्तं 'सुते इन्द्रं निमिश्ल,' 'वृषा मद' इति च । नवर्चं या त ऊतिः' पञ्चार्चानि अष्टौ सूक्तानि 'अभूरेकः' अपूर्व्या पुरु तमा' 'य ओजिष्ठ', 'स ॥ त्वे,' 'कदा भुवन्' 'मत्रा मदासः' 'अर्वाग् रथ' 'अयादितः' इति । एकादशर्चं संपातः नाम 'वया महामवृधन्' इति । एका पङ्क्तिः 'इन्द्रो मदाय' इति । अथ सूददोहाः । ऐआ. ५।८।४-६.

पक्षः उत्तरः निष्केवल्ये महाव्रते । बार्हत उत्तरः, पञ्चदशः स्तोमः, द्विशत (१०२), भरद्वाजप्रासाहः। ऐआ. ५।८।७.

पक्षः दक्षिणः निष्केवल्य शस्त्रस्य पक्षित्वेन कल्पितस्य महाव्रते तस्य अयं लोकः, अग्निः, वाक्, रथतरं, वसिष्ठ, तसख्या (१०१) इति षड् वीर्याणि। ऐआ १।१८।१। रथंतरो दक्षिण पक्ष ऐआ ५।८।१। प्रतिपत् प्रगाथः तोत्रियः 'अभि त्वा शूर'। अनुचरः प्रगाथः अनुपः अभि त्वा पूर्वपीतये । प्रतिपदनुचरौ बार्हतौ। सप्तदशर्चे 'इन्द्रस्य नु वीर्याणि' 'त्वे ह यत् पितरः' इति च। एकादशर्चे यस्तिग्मशृङ्गो वृषभः। दशर्चे 'यो जज्ञे वीर्याय'। षडृचे द्वे 'उदु ब्रह्माण्यैरत', 'आ ते मह इन्द्रः' इति च। पञ्चर्चानि 'न सोमः' 'इंद्र नरः' 'ब्रह्माणः' 'अय सोमः' इति चत्वारि एकादशर्चे सपातः नाम 'आ न इन्द्रो दूरात्'। 'इत्था हि सोमः' इति एका पङ्क्तिः। सूददोहाश्च। ऐआ. ५।८।१–३.

पक्षः दक्षिणः। राथंतरो दक्षिणः पक्षः, पञ्चदशः स्तोमः, एकशत (१०१), वसिष्ठप्रासाहः निष्केवल्यस्य महाव्रते। ऐआ. ३।८।७.

पक्षौ निष्केवल्यस्य महाव्रते ऊनातिरिक्तौ भवतः दक्षिणस्य ऋचः (१०१), उत्तरस्य ऋचः (१०२) इति। ऐआ. १।१८।३.

पङ्क्ति त्रिष्टुप् असृजत। १९।६।६.

पङ्क्तिः छन्दः पञ्चमेऽहनि पृष्ठ्ये षडहे।२२।१।१.

पच्छः व्यतिमर्षविहरण बाल खिल्यानाम्। २९।८।५ सायणः।

पच्छः शसनं नाम एकस्मिन् पादे अवसाय उत्तरस्मिन् पादे प्रणवप्रयोगः इति। ऐआ. ५।१४।२ सायणः।

पञ्चदशः स्तोमः द्वितीयेऽहनि षडहे। २०।१।१-२.

पञ्चदशस्तोमस्य विद्युति. १२।६।४, १४।४।२ सायणः।

पञ्चमेनि. पुरोहितः। वाचि एका, तस्याः शान्तिः स्वागतेन आसनदानेन च। पादयोरेका, तस्याः शान्तिः पादप्रक्षालनोदकदानेन। त्वचि एका, तस्याः शान्तिः अलंकरणेन गन्धमाल्यैर्वस्त्रैश्च। हृदये एका, तस्याः शान्तिः अन्नदानेन मधुपर्केण च। उपस्थे एका, तस्याः शान्ति. अनवरुद्धं वेश्मनि वसत्या। ४०।१।६.

पञ्चमेऽहनि निष्केवल्ये। शस्त्रे पुरीषपदानि स्तोत्रियोत्तरम्। ऐआ. ४।१।१०-१५.

पञ्चमेऽहनि 'यच्चिद्धि सत्य सोमपाः' इत्याद्याः सप्त पङ्क्तयः अहीनसूक्तेषु आवापिकाः। २९।३।९.

पञ्चमेऽहनि गौर्देवता, त्रिणवः स्तोमः, शाक्वर साम, पङ्क्तिश्छन्दः २२।१।१-५। आज्य, प्रउग, मरुत्वतीय।२२।१।१-८। निष्केवल्य, वैश्वदेव, आग्निमारुतम्। २२।२।१-१४.

पञ्चविंशस्तोम महाव्रतम्। ऐआ. १।२९;४।२१.

पञ्चावत्तैव वपा चतुरवत्तिनोऽपि। आज्य, हिरण्यशकल, वपा, हिरण्यशकल, आज्य इति। हिरण्याभावे प्रतिनिधिराज्यम्। ७।४।३,६.

पत्नी गार्हपत्यमनूची (पश्चात्) आस्ते।१३।१३।१.

पत्नीना जाघनी पशुभाग. । ता ब्राह्मणाय दद्युः। ३१।१।२.

पत्नीरहितस्यापि अग्निहोत्रादि भवति। ३२।८।९-१६; १०।१-४.

पत्नीशाला प्रपद्य शालामुखीये होम. द्वादशाहस्य दशमेऽहनि मानसग्रहे। २४।३।८.

पत्नीशालायाः सम्प्रसृप्य तीर्थे मार्जयित्वा आग्नीध्रे सम्प्रपद्य आग्नीध्रीये होमः द्वादशाहस्य दशमेऽहनि मानसग्रहे। २४।३।१४–१६.

पत्नीसयाजनिषेध. प्रायणीयाया, उदयनीया तु कृत्स्ना संतिष्ठते। २।५।५-६.

पत्न्यः काण्डवीणा वादयन्ते महाव्रते। ऐआ. ५।५।१३.

पथ्या स्वस्तिः प्रायणीयाया प्रथमा देवता, उदयनीयाया तु चतुर्थी। २।५।१५.

पदानि संहिता क्रमः एषामुपासना। ऐआ. ३।१-६.

पयस्या मैत्रावरुणी सवनीयपुरोडाशेषु पञ्चम हविः।

८।४।१०.

पराग् वचनं नाम आवृत्तिमन्तरेण ऊर्ध्वपाठः। १।२।८ सायणः।

परिक्रपन्ति = पायून् परिघ्नन्ति स्थूणा परितः श्रयदे दार्व्यार्थे औदुम्बरकाष्ठेन। ऐआ ५।२।२८.

परिधयः पौतुदारवाः उत्तरवेद्या अग्निष्टोमे। ५।२।२८.

परिधानीया प्रातरनुवाकस्य 'अभूदुषा रुशत्पशुः'। ७।८।११-१२.

परिधानीया भूमिमुपस्पृशता शंसतव्या आग्निमारुतशस्त्रे। 'एवा न इन्द्रो मघवा'। १३।१४।९-१३.

परिधानीया अहरहःशस्येषु। मैत्रावरुणस्य 'नू ष्टुत', ब्राह्मणाच्छंसिनः 'एवेदिन्द्रम', अच्छावाकस्य 'नूनं सा ते। २९।६।८-१०.

परिधानीयाः। मैत्रावरुणस्य अहीने प्रातःसवने 'ते स्याम देव', माध्यंदिने 'नू ष्टुत इन्द्र', तृतीयसवने इयमिन्द्रम। एकाहे प्रातःसवने ते स्याम, माध्यंदिने 'नू ष्टुत, तृतीयसवने 'इयमिन्द्रम्'। ब्राह्मणाच्छंसिन अहीने प्रात सवने 'इन्द्रेण रोचनाः' माध्यंदिने 'एवेदिन्द्र, वृषण,' तृतीयसवने 'बृहस्पतिर्न'। एकाहे प्रातःसवने 'स न इन्द्र शिव', 'माध्यंदिने 'एवेदिन्द्र' तृतीयसवने 'बृहस्पतिर्न.'। अच्छावाकस्य अहीने प्रात.सवने 'आहं सरस्वतीवतो,' माध्यंदिने 'नूनं सा ते,' तृतीयसवने 'उभा जिग्यथुः'। एकाहे प्रातःसवने 'गोमद्धिरण्यवत्, माध्यंदिने 'शुनं हुवेम,' तृतीयसवने 'उभा जिग्यथुः'। २७।५।१-५.

परिधानीया यूपस्य परिव्याणे सप्तमी 'युवा सुवासाः' इति। ६।२।२९-३२.

परिधानीयासु अन्त्यचतुरक्षराभ्यास क्वचित्। उक्थ्ये अच्छावाकः 'ऐरयेथामैरयेथा' इत्यभ्यस्यति चतुरक्षरम्। अग्निष्टोमे होता 'यज्ञश्रिये यज्ञश्रियोऽऽऽम्' इत्यभ्यस्यति चतुरक्षरम्। अतिरात्रे होता 'धेहि चित्र धेहि चित्रोऽऽऽम्' इति। षोडशिनि सख्युः पदे सख्युः पदोऽऽऽम्' इति। २८।७।१२-१४.

परिधानीयासु विचारः। २८।७।५-११.

परिधानीयास्तुतिः। २७।५।१-१०.

परिमर. नाम कर्मविशेषः शत्रुनाशार्थः। ४०।५.

परिवापः। लाजान् परिवाप इत्याचक्षते। न वै लाजेभ्यस्तुषान् संहरन्ति। इदं सवनीयपुरोडाशेषु तृतीयं हविः। ८।५-६। तत्र याज्या 'सरस्वतीवान् भारतीवान् परिवापः' इति।८।६-५.

परिव्याणे यूपस्य अञ्जनाद्यनुवचनीयासु सप्तमी 'युवा सुवासाः परिवीतः' इति परिधानीया। ६।२।२९-३२.

पर्णशरः 'प्रेताग्निनाशे' इति शब्दे द्र.।३२।१।७-९.

पर्यग्निकरणं पशोः। प्रैषः 'पर्यग्नये क्रियमाणायानुब्रूहि' इत्याहाध्वर्युः। अग्निर्होता 'नो अध्वरे' इति तृचमाग्नेय गायत्रमन्वाह मैत्रावरुणः (आहवनीयादुल्मुकमादाय आग्नीध्रः 'परिवाजपतिः' इति त्रिः प्रदक्षिणं पर्यग्निकरोति (आपस्तम्बः)।६।५।१-५.

पर्यास· तृचः (पर्यास इति चान्ताख्या=जैमिनिः) गायत्र निविद्धान स्य मुवः सम्राखाड़' चतुर्थेऽहनि निष्केवल्ये शस्त्रे। पञ्चमेऽहनि 'तमिन्द्रं वाजयामसि,' षष्ठेऽहनि उप नो हरिभिः सुतम्' २१।५ २२।२, ८। मरुत्वतीयशस्त्रे चतुर्थेऽहनि 'इम नु मायिनं,' पञ्चमेऽहनि मरुत्वाँ इन्द्र मीढ्वः', षष्ठेऽहनि अह दयेन वा इदम्'। २१।४; २२।१,७

पवमान· [illegible] नाम तृतीयसवनगतः। २८।४।१-३.

पवमानाः त्रयोऽपि अष्टाचत्वारिंशा भवन्ति गवामयनस्य द्वितीयेऽहनि चातुर्विंशे अग्निष्टोमत्वपक्षे। उक्थ्यत्वपक्षे तु चतुर्विंशाः। १ ।६।८-९.

पवमानोक्थ प्रहोक्थं चेति द्विविधमुक्थम्। तत्र मरुत्वतीयं शस्त्रं पवमानोक्थम्। ३६।१।१४ सायणः।

पवित्रकनाशे (दरवल्यास) प्रायश्चित्तम्। अग्नये पावकवते अष्टाकपालं निर्वपेत् 'पवित्र ते विततं' 'तपोष्पवित्रं विततं' इति याज्यानुवाक्ये।.आहुतिं वा आहवनीये जुहुयात् 'अग्नये पवित्रवते स्वाहा' इति। ३२।८।३.

पवित्रवती इष्टिः पवित्रकनाम्नि । ३२।८।३.

पशवो विवाहाः ( विवाहार्थाः ) । ३२।१।८.

पशुरग्नीषोमीयः । ६।३।९–६।७।१–४.

पशुकामः अपोनप्त्रीये एकधनासु 'अपो देवीरुपह्वये' इत्यनया अनुप्रपद्येत । ८।२।२३.

पशुकामस्य यूपस्तिष्ठेत् । नाग्नौ प्रहरेत् ।६।३।१-४ तत्पक्षे स्वरुप्रहरणमग्नौ ।६।३।८.

पशुपुरोडाशः वायव्यो द्वादशाहे प्राजापत्यपशोः । १९।४।९-४२.

पशुपुरोडाशः व्रीहिमयो यवमयो वा । ६।८।१–८; ९।१-४. ७।१।१०-१३.

पशुपुरोडाशस्य अग्नीषोमीयस्य इडोपाह्वानम् । ६।९।२१ । याज्या 'आन्यं दिवो मातरिश्वा' इति । ६।९।७-८ । संयाज्या 'स्विदस्व. हव्या' इति । ६।९।९-१०.

पशुप्रधानहविषो याज्या 'अग्नीषोमा हविषः प्रस्थितस्य इति । ६।१०।५-७.

पशुप्रधानावदानकालीनं अनुवचनीयं मनोतासूक्तं प्रैषश्च अग्नीषोमीये। ६।१०।१-४.

पशुप्रयाजस्य उत्तमस्य पुरोऽनुवाक्या च प्रैषश्च याज्या च याः स्तोकानुवचनीयास्ता एव, न पृथक् । देवताश्च विश्वेदेवास्त एव । 'होता यक्षदग्निं स्वाहा' इत्यादिः प्रैषः, आप्रीसूक्तस्था उत्तमा याज्या । ७।३।१-५.

पशुप्रशंसा । ७।८।८.

पशुविधिः अग्निष्टोमे । १३।३।२-३..

पशुशेषभक्षः । अग्नीषोमीयपशुशेषभक्षो न कर्तव्य इति पूर्वपक्षः, कर्तव्य इति सिद्धान्तः । ६।३।११-१२.

पशुषु आप्रियः ( प्रयाजयाज्याः ) यथर्षि भवन्ति । 'यथर्षि' शब्दे द्र० । १९।४।७.

पशूनां अशनापिपासे एव विज्ञानं, न विज्ञातं वदन्ति, न विज्ञातं पश्यन्ति, न विदुः श्वस्तनं, न लोकालोकौ, त एतावन्तो भवन्ति, यथाप्रज्ञं हि संभवाः । ऐआ. २।१४।९.

पशूनां कृष्णानां रोहितानां अरुणानां च, गौरस्य गवयस्य करभस्य उष्ट्रस्य गर्दभस्य च सृष्टिः प्रजापतेः प्रदीप्तात् रेतःपिण्डात् । १३।१०।२.

पशोः प्रयाजा एकादश तन्मन्त्राश्च । ६।४।१–१६ । यथर्षि । १६.

पशोः विभक्तिः कस्य को भाग इति । सत्रे सवनीयपशोः शेषभक्षणोपयोगार्थम् । अथातः पशोर्विभक्तिः। तस्य विभागं वक्ष्यामः । हनू सजिह्वे प्रस्तोतुः । श्येनं वक्ष उद्गातुः । कण्ठः काकुदः ( काकुदं ) प्रतिहर्तुः । दक्षिणा श्रोणिर्होतुः । सव्या ( श्रोणिः ) ब्रह्मणः । दक्षिणं सक्थि मैत्रावरुणस्य । सव्यं ( सक्थि ) ब्राह्मणाच्छंसिनः । दक्षिणं पार्श्वं सांसमध्वर्योः । सव्यं (पार्श्वं) उपगातॄणाम् । सव्योंऽसः प्रतिप्रस्थातुः । दक्षिणं दोः नेष्टुः । सव्यं ( दोः ) पोतुः । दक्षिण ऊरुः अच्छावाकस्य । सव्यः ( ऊरुः ) आग्नीध्रस्य । दक्षिणो बाहुः आत्रेयस्य । सव्य. ( बाहुः ) । सदस्यस्य । सदं चानूकं च गृहपतेः । दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य । सव्यौ पादौ गृहपतेर्भार्यायै व्रतप्रदस्य । ओष्ठः एनयोः ( व्रतप्रदयोः ) साधारणः (गृहपतिना विभज्य देयः) । जाघनीं पत्नीभ्यो हरन्ति, तां ब्राह्मणाय दद्युः । स्कन्ध्याश्च मणिकाः, तिस्रश्च कीकसाः ग्रावस्तुतः । तिस्रश्चैव कीकसा. अर्धं च वैकर्तस्य उन्नेतुः । अर्धं चैव वैकर्तस्य क्लोमा च शमितुः, तद् ब्राह्मणाय दद्यात् यदि (शमिता) अब्राह्मणः स्यात् । शिरः सुब्रह्मण्यायै । यः श्वः सुत्यां प्राह तस्य ( आग्नीध्रस्य ) अजिनम् । इळा सर्वेषां ( साधारणी ) होतुर्वा ( असाधारणी ) । स एष स्वर्ग्यः पशुः, य एनमेव विभजन्ति । अथ येऽतोऽन्यथा, तद्यथा सेलगाः ( केवलोदरपोषणपरायणाः ) पापकृतो वा पशुं विमथ्नीरन्, तादृक् तत् । ३१।१।१–७.

पशोः शामित्रदेशे नयनम् । तं वा एतं पशुं आप्रीतं सन्त ( प्रयाजैस्तोषित ) पर्यग्निकृत उदञ्च नयन्ति, तस्योल्मुकं पुरस्ताद्धरन्ति । ७।१।२–५.

पशोः स्विष्टकृतो विधिः 'स्विष्टकृतं यजति' । ६।१०।१०.

पशोः हृदयादेः प्रधानहविषामवदानकाले मनोताऽनुवचने प्रैषः 'मनोतायै हविषोऽवदीयमानायानुब्रूहि'

इति। ६।१०।१.

पश्चौ वनस्पतियागस्य विधिः 'वनस्पतिं यजति'। ६।१०।८-९.

पश्विडा 'इळामुपह्वयते। ६।१०।११.

पश्विडा सर्वेषां वा साधारणी, होतुरेव वा असाधारणी पशुभागः। ३१।१।२.

पाकयज्ञा इळाविधाः (इडासदृशाः)। १४।२।२.

पाकयज्ञाः सप्त। हुतः प्रहुत आहुतः शूलगवो बलिहरण प्रत्यवरोहणमष्टकाहोम इति। सोऽय सूत्रान्तरकारस्य पक्षः। आश्वलायनस्तु हुतादीन् त्रीनेव पाकयज्ञानाह (गृह्यसूत्रे)। १४।२।२ सायणः।

पात्नीवतग्रहस्य आग्नीध्रो यजति उपांशु। अनुवषट्कारो नास्ति। २६।३।८-९.

पात्रासादनकाले प्रवर्ग्ये होतुर्मन्त्रद्वय, 'श्येनो न योनिं, आ यस्मिन् सप्त' इति सत्साद्यमानायान्वाह। ४।५।११.

पात्री औदुम्बरी। तत्र धानस्पत्यानि फलानि औषधानि तोक्यानि च समोप्यानि। ततः दधि मधु सर्पिः आतपवर्ष्या आपश्च अभ्यानीय भूमौ प्रतिष्ठाप्य तेन अभिषेकः ऐन्द्रे महाभिषेके। ३९।३।१.

पाथिकृती इष्टिः 'अत्यये' इति शब्दे द्र०। ३२।७।३.

पादप्रक्षालनकाले पुरोहित. पठति, 'दक्षिण पादमव नेनिजे, इत्यादि 'अवरुन्धे' इत्यन्तम्। तत. पादप्रक्षालनावशिष्टोदकस्य अवेक्षण पुरोहितेन 'आपः पादावनेजनी द्विषन्त निर्दहन्तु मे' इत्यनेन।४०।४.

पारिक्षितिः नाम मन्त्राः कुन्तापसूक्ते चत्वारोऽनुवक्तव्याः पञ्च', 'राज्ञो विश्वजनीनस्य' इत्यादयः निर्देश। ३०।६।१०-१५.

पारुच्छेपं सूक्तं निष्केवल्ये शस्त्रे षष्ठेऽहनि, 'एन्द्र याह्युप नः' इति २२।८।१। मरुत्वतीये शस्त्रे च 'स त्वं रथमिन्द्र' इति अतिच्छन्दाः सप्तपदम्। २२।७।८.

पारुच्छेपीनां ऋचा छन्दः रोहित नाम। ऋक् १।१२७-१३९ सूक्तेषु मिलित्वा शतं ऋचः। २२।५।३.

पालाशो यूपस्तेजस्कामस्य ब्रह्मवर्चसकामस्य च। ६।१।१०-१३.

पालाशानि वा औदुम्बराणि वा मिश्राणि वा प्रेङ्खस्य काष्ठानि महाव्रते माध्यंदिने निष्केवल्यशस्त्रपाठकाले होतुरुपवेशनार्थम्। ऐआ. ५।३।४.

पावनं दीक्षितसंस्कारः। एकविंशत्या दर्भपिञ्जूलैः पावयन्ति। १।३।८-९.

पावमान्यास्तिस्रः षष्ठेऽहनि ब्राह्मणाच्छंसिशस्त्रे अनुष्टुभः 'सुतासो मधुमत्तमाः' इत्यादयः। ३०।१०। १०-११.

पावमान्यः मण्डलर्चयः प्राणत्वेन उपास्याः। ऐआ. २।१।१-६; २०।१-५.

पावीरवी। 'पावीरवी कन्या' इति ऋक् आग्निमारुतशस्त्रे राकोत्तरं अग्निष्टोमे। १३।१३।८.

पितृभ्यः पूर्वेद्युः क्रियते, उत्तरमहर्देवान् यजते। ३२।४।१.

पित्र्याः 'उदीरतामवरः' इत्याद्यास्तिस्र ऋचः। प्रयुच पित्र्यासु आहावः, आग्निमारुते शस्त्रे याम्युत्तरं अग्निष्टोमे। याम्योभ्या पूर्वमेके। १३।१३।९, १२-१९.

पुच्छं निष्केवल्यस्य महाव्रते। भद्रं नाम साम पुच्छार्थे, तच्च द्विपदासु। 'इमा नु कं भुवना' इति पञ्चर्चं सूक्त, 'आ याहि वनसा सह' इति चतुर्ऋचं इति नव समाम्नाताः। अथासमाम्नाताः 'प्र व इन्द्राय' इत्यादयः पञ्चमारण्यकपठिताः, 'एव ब्रह्मा' इति तिस्रः, 'आधूर्ष्वस्मै' इत्येका, इति द्वाविंशतिर्द्विपदाः, सूददोहाश्च। धाय्या 'यद्वावान', सूददोहाश्च। ऐआ. ५।८।८-२०.

पुच्छस्य (चित्याग्नेः पुच्छस्य) उपस्थानं महाव्रते। होता पश्चात् प्राङ् पुच्छं 'नमस्ते भद्राय यच्चे पुच्छं या ते प्रतिष्ठा' इति मन्त्रेण करोति। ऐआ. ५।२।५.

पुण्ड्राः नाम ये विश्वामित्रपुत्राः शप्ताः पित्रा। ३३।६।२.

पुत्रकामाः शौनःशेपाख्यानं ब्राह्मणमुखात्शृणुयुः। लभन्ते ह पुत्रान्। ३३।६।१६.

पुत्रप्रशंसा । ३३।१–१४.

पुत्रविक्रयः अजीगर्तेन कृतः । ३३।३।७.

पुत्रस्तु ज्योतिः स्वर्गस्य । ३३।१।८.

पुत्रेण पितृऋणापाकरणं भवति । ३३।१।४.

पुरीषपदानि नाम मन्त्राः पृष्ठ्यषडहस्य पञ्चमेऽहनि निष्केवल्ये शस्त्रे स्तोत्रियोत्तर उपसंतनीयाः । 'एवा ह्येवेवा ह्यग्ना३इ । एवा ह्येवेवा ही३न्द्रम् । एवा ह्येवेवा हि विष्णा३उ । एवा ह्येवेवा हि पूष३न् । एवा ह्येवेवा हि देवा३ः । एवा हि शक्रो वशी हि शक्रो वशाँ अनु । आ यो मन्याय मन्यवे उपो मन्याय मन्यवे । उपेहि विश्वध । विदा मघवन् विदो३म्' इति । ऐआ. ४।१।-१०–१५.

पुरीषस्थापनार्थं ऊबध्यगोहः नाम अवटः कर्तव्यः पशौ ७।११।८–९.

पु–रु–षः इति त्रीण्यक्षराणि महाव्रते निष्केवल्यस्य प्रतिपदि प्रथमद्वितीयचतुर्थपादेषु क्रमेण विहरणीयानि । ततो 'नदं व ओदतीनां' इत्यस्या ऋचः पादशो विहरणम् । ऐआ. १।१२।१७–१८.

पुरुषस्य ( मनुष्यस्य ) सृष्टिः परमेश्वरेण कृता । ऐआ. २।२६.

पुरुषे त्वेव आविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति, विज्ञातं पश्यति, वेद श्वस्तनं, वेद लोकालोकौ, मर्त्येनामृतमीप्सति, एवं संपन्नः । २।१४।४.

पुरोडाशः सवनीयपुरोडाशेषु अष्टाकपालः प्रातःसवने, एकादशकपालो माध्यंदिने, द्वादशकपालस्तृतीयसवने इति के चित् । ८।५।४। सर्वे एकादशकपाला एवेति सिध्दान्तः । सवनीयपुरोडाशाश्च नाम आज्य धानाः करम्भः परिवापः पुरोडाशः पयस्या चेति । ८।५।७, ८।६।१.

पुरोडाशभागस्य घृतेनाक्तस्यैव भक्ष इति के चित् । अक्तस्य अनक्तस्य चेति सिध्दान्तः । ८।५।६–८.

पुरोडाशसत्रं लोक्य (प्रेक्षणीयं इति सायणः । स्वर्ग्यं इति पैवतः ) । ६।९।४.

पुरोधातारः त्रयो देवाना, पृथिवी अन्तरिक्षं द्यौश्चेति । ४०।४.

पुरोऽनुवाक्याः आज्यभागयोः दीक्षणीयायाम् । पूर्वमनीजानस्य, 'त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव.' इति । पूर्वमीजानस्य 'अग्निः प्रत्नेन मन्मना, सोम गीर्भिष्ट्वा वय' इति के चित् । तत्रादत्य 'अग्निर्वृत्राणि, त्वं सोमासि' इति वार्त्रघ्नौ एव कुर्यात् । १।४।१–७.

पुरोऽनुवाक्याः । उन्नीयमानसूक्तानि प्रातःसवने आ त्वा वहन्तु हरयः । इति ऐन्द्रीर्गायत्रीरन्वाह न वै । माध्यंदिने असावि देव गो ऋजीक इति दशर्चं सूक्तम् । तृतीयसवने इहोपयात शवसो इति नवर्चम् । एतानि सूक्तान्येव अनुवक्तव्यानि इति सिध्दान्तः । प्रतिसूक्तं आदिमाः सप्तसप्तैव ऋचो ग्राह्याः इति पूर्वपक्षः । २८।१।१–९.

पुरोऽनुवाक्याः । यावत्यो वै पुरोऽनुवाक्यास्तावत्यो याज्याः । २८।१।८

पुरोऽनुवाक्या. पशुप्रयाजस्य उत्तमस्य सा एव, याः स्तोकानुवचनीया. । ७।३।१–५.

पुरोऽनुवाक्या याज्यायाः सकाशात् न्यूना वा समा वा कार्या, न ज्यायसी । व्यूढ वा एतद्यज्ञे क्रियते, यत्र पुरोऽनुवाक्या ज्यायसी याज्यायै । ९ । २ । ५ .

पुरोऽनुवाक्ये आज्यभागयोः आतिथ्यायां 'समिधाऽग्निं दुवस्यत, आप्यायस्व समेतु ते' इति । ३।६।१–४.

पुरोरुक् ( निवित् ) आज्यशस्त्रे अग्निग्रामे । तूष्णींशंसोत्तर, उच्चैः, द्वादशपदा, जातवेदस्या । अग्निर्देवेध्द' इत्यादिः ( ११–१२ ) । १०।७।५–११; ९।२.

पुरोहितः पञ्चमेनि. । पञ्चमेनिशब्दे द्र० ४०।१।६.

पुरोहितः पादप्रक्षालनकाले दक्षिण पादमवनेनिजे इत्यादि अवरुध्ये इत्यन्त पठेत् । पादप्रक्षालनावशिष्टोदकं च आपः पादावनेजनीर्द्विषन्त निर्दहन्तु मे इति अवेक्षेत । ४०।४.

पुरोहितः । यो ह वै त्रीन् पुरोहितान् त्रीन् पुरोधातॄन् वेद स ब्राह्मणः पुरोहित. । अग्निर्वाव पुरोहितः पृथिवी पुरोधाता, वायुर्वाव पुरोहितोऽन्तरिक्षं पुरोधाता, आदित्यो वाव पुरोहितो द्यौः पुरोधाता । ४०।४.

पुरोहितः राज्ञा यजमानेन कर्तव्य । ४०।१–५.

पुरोहित राष्ट्रगोप , विद्वान् ब्राह्मण राज्ञ पुरोहित । ४०।२।२–४, ४।२–३

पुरोहित विष्टरमभिमृशति वरणप्रयोगे । 'अभिमर्श शब्दे' द्र० विष्टरे च उपविशति । 'उपविशति' शब्दे द्र०। ४०।४

पुरोहितप्रशसा । राजान परिरक्षति, आनिष्टपरिहार करोति, इष्ट प्रापयति, प्रजाऽनुराग जनयति, अयुवमार्यस्य (अयुव आर्यस्य इति या अयुवमारि अस्य इति या पदच्छेद ) राष्ट्र भवति, नैन पुरा आयुष प्राणो जहाति, आजरस जीवति, सर्वमायुरेति, न पुनर्म्रियते, क्षत्रेण क्षत्र जयति, बलेन बलमश्नुते । ४०।२।१ ३। तस्मै विश सजानते समुखा एकमनस , तस्य राजा मित्र भवति, द्विषन्तमपबाधते । ४०।४।२। पुरोहित आहवनीय , तज्जाया गार्हपत्य , तत्पुत्र अन्वाहार्यपचन । ४०।१।३ ५.

पुरोहितवरणे राज्ञो मन्त्रो अमोऽहमस्मि, तनूरसि तन्व इति ।४०।४।४

पुरोहितस्यार्षेयेण क्षत्रियस्य प्रवरादि प्रवराधे क्षायाम् । ३४।७।२

पुरोहितस्य जप वरणप्रयोगे । ' जप ' शब्दे द्र० । ४०।४

पुरोहितस्य प्रतिज्ञा भूर्भुव स्वरोम् इति मन्त्रेण । ४०।४.

पुलिन्दा नाम समाज विश्वामित्रकुला ये विश्वा दासा । ३३।६।२

पुष्टिकामस्य आज्यशस्त्र महानते विशोविशो वो अतिथिं इति पञ्चदशर्चम् । तत्र च ' अगन्म वृत्रहन्तम ' इति द्वितीय तृच प्रथम शसेत् । ऐआ १।३।५-२१

पुष्टिकामस्य बैल्वो यूप । ६।१।६ ९

पूतभृत् नाम सोमपात्रविशेष । ३५।६।४.

पृथिवी मेध्या । ६।८।५

पृष्ठसामानि षडह क्रमेण रथतर बृहत् वैरूप वैराज शाक्वर रैवतानि । १९।६।१ ५ सायण ।

पृष्ठ्य षडह २० २२ अध्यायषु प्रतिपादित ।

पृष्ठ्य षडहे चतुर्थमह आनुष्टुभम् । २१।४।६। चतुर्थेऽहनि न्यूङ्ख ।२१।३।१ १२। छन्दासि क्रमेण दामाधारभूतानि प्रथमेऽहनि गायत्री, द्वितीये त्रिष्टुप्, तृतीये जगती, चतुर्थे अनुष्टुप्, पञ्चम पङ्क्ति , षष्ठ अतिच्छन्दा । १९।६।६ सायण ।

पृष्ठ्ये षडहे देवता । प्रथम अग्नि , द्वितीये इन्द्र , तृतीये विश्वेदेवा , चतुर्थे वाक, पञ्चमे गौ , षष्ठ द्यौ ।

पृष्ठ्ये षडहे षष्ठेऽहनि प्रात सवने माध्यदिने च प्रस्थितयाज्याना पुरस्तात् पारुच्छपी ऋच उपदध्यात् प्रत्येकमेकैकाम् । २२।५।१ ५

पृष्ठ्ये षडहे स्तोमा । प्रथमे त्रिवृत् ।२०।१।१ २। द्वितीये पञ्चदश ।२०।३।१–२। तृतीये सप्तदश । ।२१।१।१–२। चतुर्थे एकविंश ।२१।४।१–२। पञ्चम त्रिणव (३×९=२७) ।२२।१।१–२। षष्ठे त्रयस्त्रिंश २२।७।१–२

पैतुदारव्या परिधय उत्तरवेद्या अग्निष्टोमे । पीतुदारु नाम खदिर इत्येके, देवदारु इत्यन्ये । ५।२।२८ सायण ।

पोतु ऋतुयाजो (प्रैषसूक्ते ५।२,८) उक्थ्ये क्रतौ, प्रस्थितयाज्याश्च तिस्र । १५।६।६

पोतु प्रात सवने प्रस्थितयाज्या ' मरुतो यस्य हि ' इति । २८।२।३। माध्यदिने ' अर्वाङेहि सोमकाम '। २८।३।१०। तृतीयसवने ' आ नो यज्ञ ग्नायो ' । २८।४।९

पोतु शस्य दो पशुभाग सले । ३१।१।२

पौर्णमास्या अमावास्याया वा अत्यये प्रायश्चित्त ' अत्यये ' इत्यत्र द्र० ।३२।७।३.

प्रउगम् । आग्नेयीषु सामगा स्तुवते, वायव्यया होता प्रतिपद्यते । ११।४।१–११

प्रउग आज्यशस्त्रोत्तर, आज्य तु बहिष्पवमानो चरम् । १०।५।१

प्रउग शस्त्र अग्निष्टोमे प्रात सवने । वायव्यस्तृच वायवायाहि, ऐन्द्रवायवस्तृच इन्द्रवायू इमे सुता , मैत्रावरुणस्तृच मित्र हुवे पूतदक्ष, आश्विनस्तृच अश्विना यज्वरी, ऐन्द्रस्तृच इन्द्रायाहि चित्रभानो,

वैश्वदेव तृचः ओमासश्चर्षणी, सारस्वतस्तृचः पावका नः। ११।१।२–११. ११।२।४-१० । सप्त देवताः शंसति ११।३।११ याज्या विश्वेभिः सोम्यं मधु । ११।४।१२। वषट्कारानुवषट्कारौ । ११।५।१-६ । प्रउगेण आज्यमनु शंसति होता ।११।५।१.

प्रउगं शस्त्रं छन्दोमप्रथमेऽहनि त्रैष्टुभम् । आ वायो भूष, प्र याभिर्यासि, आ नो नियुद्भिः इति प्रथमस्तृचः। प्र सोता जीरो, ये वायव इन्द्र, या वा शतं नियुतो इति द्वितीयस्तृचः । प्रयद्वा मित्रावरुणा इति तृतीयः । आ गोमता नासत्या इति चतुर्थः । आ नो देव शवसा इति पञ्चमः । प्र वो यज्ञेषु देवयन्तो इति षष्ठः। प्र क्षोदसा धायसा इति सप्तमस्तृचः।२३१।११.।

प्रउगं शस्त्रं छन्दोमद्वितीयेऽहनि त्रैष्टुभम् । कुविदङ्ग नमसा, पीवो अन्नाँरयि, उच्छन्नुषसः इति तृचः प्रथमः । उशन्ता दूता इत्येका, यावत्तरस्तन्वो इति द्वे इति द्वितीयस्तृचः । प्रति वा सूर उदिते इति तृतीयः। धेनुः प्रत्नस्य काम्यं इति चतुर्थः । ब्रह्माण इन्द्रोप इति पञ्चमः । ऊर्ध्वो अग्निः सुमतिं इति षष्ठः। उत स्या नः सरस्वती इति सप्तमस्तृचः । २३।२।८-९.

प्रउगं शस्त्रं छन्दोमतृतीयेऽहनि । प्रवीरया शुचयो ददिरे ते (संहितायां 'वा' इति पद, अत्र तु 'ते' इति पदं) इति प्रथमस्तृचः।ते सत्येन मनसा इति द्वितीयः। दिवि क्षयंता रजसः इति तृतीयः।आ विश्ववाराऽश्विना इति चतुर्थः । अयं सोम इन्द्र तुभ्यं इति पञ्चमः । प्र ब्रह्माणो अङ्गिरसो इति षष्ठः । सरस्वतीं देवयन्तो, आनो दिवो बृहता, सरस्वत्यभि नो इति सप्तमतृचः। २४।१।९.

प्रउगं शस्त्रं पृष्ठ्ये षडहे प्रथमेऽहनि । वायवा याहि दर्शत इत्यग्निष्टोमवत् । २०।१।६ । द्वितीयेऽहनि वायो ये ते सहस्रिणः इति ।२०।२।५। तृतीयेऽहनि औष्णिहं वायवा याहि वीतये इत्येका, वायो याहि शिवा इति द्वे इति प्रथमस्तृचः । इन्द्रश्च वायवेषां इति द्वे, तत्र अन्यतरा द्विर्वक्तव्या इति द्वितीयस्तृचः। आ मित्रे वरुणे वयं इति तृतीयः । अश्विनावेह गच्छतं इति चतुर्थः । आ याह्यद्रिभिः सुतं इति पञ्चमः । सजूर्विश्वेभिर्देवेभिः इति षष्ठः । उत नः प्रियाः प्रियासु इति सप्तमस्तृचः । २१।१।१२.

प्रउगं शस्त्रं चतुर्थेऽहनि । वायो शुक्रो, विहि होत्रा, वायो शतं हरीणा इति तृचः प्रथमः । इन्द्रश्च वायवेषां इति द्वितीयः । आ चिकितान सुक्रतू इति तृतीयः। आ नो विश्वाभिरूतिभिः इति चतुर्थः । त्यमुवो अप्रहणं इति पञ्चमः । अपत्यं वृजिनं रिपुं इति षष्ठः । अम्बितमे नदीतमे इति सप्तमस्तृचः । इदमानुष्टुभम् । २१। ४।१०.

प्रउगं शस्त्रं पञ्चमेऽहनि । आ नो यज्ञं दिविस्पृशं इति द्वे, आ नो वायो महे इत्येका इति प्रथमस्तृचः । रथेन पृथु पाजसा इति द्वितीयः । वह्वयः सूरचक्षसः इति तृतीयः । इमा उ वां दिविष्टयः इति चतुर्थः । पिबा सुतस्य रसिनः इति पञ्चमः । देवंदेवं वसे इति षष्ठः । बृहदु गायिषे इति सप्तमस्तृचः । इदं बार्हतम् । २२।१।७.

प्रउगं शस्त्रं षष्ठेऽहनि पारुच्छेपं अतिच्छन्दाः सप्तपदम् । स्तीर्णं बर्हिरुप नो इति प्रथमस्तृचः । आवां रथो नियुत्वान् इति द्वितीयः । सु षु मा यातमद्रिभिः इति तृतीयः । युवा स्तोमेभिर्देवयन्तो इति चतुर्थः । अवर्महं इन्द्र इति द्वे, वृषन्निन्द्र इत्येका इति पञ्चमः । अस्तु श्रौषट्, ओ षु णो अग्ने, ये देवासो दिव्येकादश इति षष्ठः । इयमददाद्रभसमृण इति सप्तमः । २२।७।५.

प्रउगं शस्त्रं महाव्रते औष्णिहं आनुष्टुभं बार्हतं पाङ्क्तं त्रैष्टुभं जागतं वा कुर्यात् इति पक्षाः । गायत्रमेवेति सिद्धान्तः । ऐआ. १।३।२-३.

प्रउगं शस्त्रं विश्वजिति महाव्रते च प्राकृतमेव वायवायाहि दर्शत इति । ऐआ ५।१।४.

प्रउगं शस्त्रं वैश्वदेवग्रहणादूर्ध्वं शस्यते । ऐआ. ५।१।४ सायणः ।

प्रउगशस्त्रयाज्यान्ते वषट्कारः ।१२।५।१.

प्रउगशस्त्रे विकारेण काम्याः प्रयोगाः । अनिष्टजनकाः शस्त्रोः ।११।३।३–९। इष्टजनको यजमानस्य । ११।३।१०.

यशेन इति सूक्तं आवपेत।३०।१-४.

शिल्पप्रशंसा। ३०।१।१-५.

शिल्पशस्त्रं धिष्ण्यशस्त्रम्। षष्ठेऽहनि तृतीयसवने। २९।८.

शिल्पानि शंसति। ३०।१-१०.

शिल्पानि सहचराणि नाभानेदिष्ठं, वालखिल्याः, वृषाकपिः, एवयामरुत् इति चत्वारि। एतानि सह वा शंसेत् सह वा न शंसेत्। ३०।४।५-६.

शिशिरे ऋतौ द्वादशाहस्य दीक्षाः कर्तव्या.। १९।४।३.

शिष्टाः आचार्यादीनामागमनात् प्राक् पश्चाद्वा नोत्तिष्ठन्ति, किंतु यावता देशव्यवधानेन ते पश्येयुः तावति देशे तद्दृष्टिपाते एव सहसोत्तिष्ठन्ति। 'एषा वा अपचितिः, यां पश्यते करोति'। ऐआ १।८।१७.

शीर्षण्यानूच्यानि अरत्निमात्राणि। शिरसि उपरिभागे अवस्थितानि अन्वक्=निर्गक् अवस्थितानि काष्ठानि। शिर्षण्यानि च तानि अनूच्यानि च काष्ठानि अरत्निमात्राणि आसन्द्याः औदुम्बर्याः। अभिषेके। ३७।१।३.

शुक्लः पक्षः यागेषु मुख्यः।१९।५।८.

शुचीष्टिः 'शवाग्निना' इत्यत्र द्र०।३२।६।३.

शुनःशेपः देवानुपससार। प्रजापतिं, कस्य नूनं कतमस्य ऋक्। अग्निं, अग्नेर्वयं प्रथमस्य ऋक्। सवितारं, अभि त्वा देव सवितः तृचः। वरुणं, अभि त्वा देव इति सूक्ते तृचात् उत्तराभिः ३१ ऋग्भिः। अग्निं, तत उत्तराभिः २२ ऋग्भिः। विश्वान् देवान्, नमो महद्भ्यो ऋक्। इन्द्रं, यच्चिद्धि सत्य सोमपाः सूक्तं, उत्तरसूक्तस्य च १५ ऋचः। इन्द्रदत्तं रथं प्रतीयाय, शश्वदिन्द्रः पोप्रुथद्भिर् ऋक्। अश्विनौ, उत्तरेण तृचेन आश्विनाऽश्वावत्या इति। उषसं, कस्त उषः तृचः। ३३।४।१४.

शुनःशेपः विश्वामित्रस्य दत्तकः पुत्रः देवैर्दत्तः। स देवरातो नाम बभूव। ३३।५।२.

शुश्रुवान् गतर्भाः इत्युच्यते। १५।४।६ सायणः।

शुष्मं=वीर्यम्। ४०।३।३.

शूद्रः अन्यस्य प्रेष्यः कामोत्थाप्यः यथाकामवध्यः। ३५।३।४.

शूद्रः अहुतादः आर्त्विज्याभावात्। २४।१।१.

शूद्रः। स्त्रीशूद्रयोः वेदाधिकारः प्रतिबद्धः। उपनीतस्यैव अध्ययनाधिकारं ब्रुवत् शास्त्रं अनुपनीतयोः स्त्रीशूद्रयोः वेदाध्ययनं अनिष्टप्राप्तिहेतुः इति बोधयति। कथं तर्हि तयोः इष्टोपायावबोधः? पुराणादिभिः इति ब्रूमः। अत एवोक्तं 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा। इति भारतमाख्यानं मुनिना कृपया कृतम्॥' इति। उपोद्धाते सायणः पृ. २.

शूद्राणां धर्मानुष्ठानकाले आपो भक्षः। ३५।३।४.

शेषभक्षणं अग्नीषोमीयस्य पशोः नास्तीति केचित्, तन्न। किंतु आशितव्यं च लीप्सितव्यं च। लिप्सा इच्छा। ६।३।११-१२.

शेषभक्षणं होत्रा अग्निष्टोमे आश्विनग्रहस्य 'एष वसुः संयद्वसुः' इत्यादिना मन्त्रेण कर्तव्यम्। तत्र सर्वतः परिहार-सर्वासु दिक्षु स्वशिरसः परितो हरणं प्रदक्षिणं कृत्वा कर्तव्यम्।९।३।७-८। ऐन्द्रवायवग्रहस्य 'एष वसुः पुरूवसुः' इत्यादिना मन्त्रेण पुरस्तात् (प्राङ्मुखः सन्) प्रत्यञ्च (पात्र कृत्वा आत्मसंमुख) भक्षयति। ९।३।३-४। मैत्रावरुणग्रहस्य तु 'एष वसुर्विदद्वसुः' इत्यादिना मन्त्रेण पुरस्तात् प्रत्यञ्च भक्षणम्। ९।३।६। सवनीयपुरोडाशानां 'यतो घृतेन अनक्त स्यात् ततः प्राश्नीयात्' इत्याहुः, तन्न तथा, किंतु यत एव कुतश्च प्राश्नीयात्। ८।१।६ ७.

शैशिरयोर्मासयोर्द्वादशाहः कार्यः। १९।४।१-३.

शौनःशेपाख्यानं राजसूये। तदेतत् परऋक्शतगाथं, शुनःशेपेन दृष्टाः (९७) ऋचः तिस्रश्चान्या मिलित्वा शतम्। ब्राह्मणे प्रोक्ता (३१) गाथाश्च। एतैः सर्वैरुपेतं 'हरिश्चन्द्रो ह' इत्यादिकं सर्वं शौनःशेपाख्यानम्। तत् होता राज्ञेऽभिषिक्तायाचष्टे। हिरण्यकशिपौ आसीन आचष्टे। 'हिरण्यकशिपौ आसीनोऽध्वर्युः प्रतिगृणाति। 'विजितो राजा एतच्छृणुयात्, नैनः परिशिष्यते। अयं अयज्ञसंयुक्तः कल्पः'। पुत्रकामाश्च शृणुयुः, लभन्ते ह पुत्रान्। ३३।१-६.

शौनःशेपाख्याने ऋचां प्रतिगरः ओऽऽऽम् इति । गाथाना 'एवं तथा' इति । ३३।६।१२-१३.

शौनकयज्ञः नाम दर्शपूर्णमासविकृतिरूपः ।१४।२।९ सायणः ।

श्यापर्णनामकब्राह्मणकुलगतपुरुषरहितं यज्ञं विश्वंतरो राजा चक्रे । ३५।१।१.

श्येत साम स्वामिदाद्धो नरः इत्यस्यामृच्युत्पन्नम् । १९।५।६ सायणः ।

श्रमः कार्यः,नान्यथा श्रीर्वा ज्ञानं वाऽन्यद्वा लभ्यते। नानाश्रान्ताय श्रीरस्ति इति रोहित शुश्रुम । पापो नृषद्वरो । जन इन्द्र इच्चरतः सखा । चरैवेति । इत्यादि अर्थवादकाण्डे१६२७क्रमाङ्के द्रष्टव्यम् । ३३।३।१-५.

श्रीकामः अग्निष्टोमे दीक्षणीयाया 'एना वो अग्निं, स योजते अरुषा' इति द्वे बृहत्यौ संयाज्ये कुर्यात् । १।५।१०.

श्रोणिः ऊरुमूलम् । ३१।१।२ सायणः ।

षडहः पृष्ठ्यो द्वादशाहे । २०-२२ अध्यायेषु । अभिप्लवः गवामयने आदित्यानामयने च । १८।१। १-५.

षडहे अहरहः शस्याः कद्वन्तः प्रगाथाः 'कस्तमिन्द्र त्वा वसुं, कन्नव्यो अतसीना, कदून्वस्याकृतम्' इति । २९।५।१.

षडहे चतुर्थेऽहनि षोडशिग्रहणम् । पृष्ठ्ये । १६।१।१.

षडहे छन्दांसि क्रमेण गायत्री, अनुष्टुप्, त्रिष्टुप्, पङ्क्तिः, जगती, अतिच्छन्दाः इति । सामानि च क्रमेण रथंतरं, बृहत्, वैरूपं, वैराजं, शाक्वरं, रैवतं इति । १९।६।१-६.

षडहे शस्त्राणि । अनुरूपः, संपातसूक्तानि, आवपनीया ऋचः, अहीनसूक्तानि, अहरहः शस्यानि, कद्वन्तः प्रगाथाः, सूक्तप्रतिपदः, परिधानीयाश्च इति ।२९।१-६.

षडहे स्तोमाः क्रमेण त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः ( ३×९=२७ ), त्रयस्त्रिंशश्चेति । ३६।४।१ सायणः ।

षष्ठेऽहनि घोर्देवता, त्रयस्त्रिंशः स्तोमः, रैवतं साम, अतिच्छन्दाश्छन्दः । २२।७-१०.

षष्ठेऽहनि प्रस्थितयाज्यानां पुरस्तात् प्रत्येकं पारुच्छेपीः ऋचः एकैकामुपदध्यात् । २२।५।१-५ । यजमानोऽध्वर्युश्च ऋतुयाज्या स्वयमेव पठेत्, न होत्रे प्रयच्छेत् । २२।४।२.

षष्ठेऽहनि शिल्पानि । अच्छावाकस्य-तत्र एवयामरुते न्यूङ्खः । ३०।४।३० । ब्राह्मणाच्छंसी-सुकीर्तिं शंसति 'अप प्राचः' इति । वृषाकपिं शंसति 'वि हि सोतोरसृक्षत' इति । न्यूङ्खयति । ३०।३। नाराशंसीः शंसति प्रग्राहं,पादेपादे । न न्यूङ्खयेत्, निनर्दस्तु कर्तव्यः । रैभीः शंसति प्रग्राह न्यूङ्खो नास्ति, निनर्दः कर्तव्यः । पारिक्षितीः शंसति प्रग्राहं, न न्यूङ्खः, निनर्दः कर्तव्यः । कारव्याः शंसति प्रग्राहं, न्यूङ्खो नास्ति, निनर्दोऽस्ति । दिशां क्लृप्तीः शंसति पञ्च अर्धर्चशः, न्यूङ्खनिनर्दौ न स्तः । जनकल्पाः शंसति अर्धर्चशः । इन्द्रगाथाः शंसति अर्धर्चशः । ( नाराशंसीरारभ्यः इन्द्रगाथान्तं कुन्तापसूक्तं नाम त्रिंशदृचम् ) । ३०।६ । ऐतशप्रलापं शंसति पदावग्राहं प्रवह्लिकाः शंसति अर्धर्चशः । आजिज्ञासेन्याः शंसति । प्रतिराधं शंसति । अतिवादं शंसति अर्धर्चशः । ३०।७। देवनीथं शंसति सप्तदशपदं पदावग्राहं, उत्तमेन पदेन प्रणौति (प्रणवं योजयति)।३०।८-९। भूतेच्छदः शंसति अर्धर्चशः । आहनस्याः शंसति दश, अत्र न्यूङ्खयति । दाधिक्रीं शंसति 'दधिक्राव्णो अकारिषं' इति । 'सुतासो मधुमत्तमाः' इति पावमानीः शंसति ( तिस्रः ) । अव द्रप्सो अंशुमतीमतिष्ठत इति ऐन्द्राबार्हस्पत्यं तृचं शंसति । ३०।१०। मैत्रावरुणः वालखिल्याः शंसति विहृताः । पच्छः प्रथमे सूक्ते, अर्धर्चशो द्वितीये, ऋक्शस्तृतीये । ३०।२।१-३ । अतिमर्शमेव विहरेत् प्रथमाया ऋचः प्रथमं पादं द्वितीयस्या ऋचः द्वितीयपादेन योजयेत् इति रीत्या षट् सूक्तानि । अष्टमं सप्तमत्वेन सप्तमं चाष्टमत्वेन शंसेत् । ३०।२।६,९। होता 'इदमित्था रौद्रं' इति नाभानेदिष्ठं शंसति, तस्य उपोत्तमायाः प्राक् 'ये यज्ञेन दक्षिणया' इति सूक्तं शंसेत् । ३०।१।६-२४ ।

षोडशकलं अग्निहोत्रम् । पयोरूपं अग्निहोत्रहविः षोडशावयवं षोडशदेवताकं भवति इति तदर्थः ।

२५।१।५-८.

षोडशिशस्त्रं अविह्रतं यथाधीतपाठो,न व्यतिषङ्गः। १६।२।४ सायणः। तन् समृद्धो यजमानः शंसयेत्। १६।४।५–६। छन्दोगानुसारेण नानदसामपक्षे अविह्रतत्वेन, गौरिवीतसामपक्षे च विह्रतत्वेन शंस्तव्यम्। १६।२।१–४.

षोडशिशस्त्रं 'असावि सोम इन्द्र ते' इत्यादि। तत्र अन्तिमे तृचे अन्तिमायाः ऋचः प्राक् षोडशपदा निवित् (११।१–१६) धीयते। १६।१–२.

षोडशिशस्त्रं द्विविधं विह्रतं अविह्रतं च। तत्र अविह्रतं नाम अध्ययनक्रमेणैव शंसनम्। विह्रतं तु ऋचो परस्परं व्यतिषङ्गः। १६।१।४ सायणः।

षोडशिशस्त्रं सर्वं आश्वलायनश्रौते ६।२।१-१२; ६।३।१–१९ इत्यत्र द्रष्टव्यम्।

षोडशिसंस्थः ज्योतिष्टोमः उक्थ्यगर्भितः एकेन स्तोत्रेण अतिरिच्यते। तस्मात् अत्र षोडश स्तोत्राणि भवन्ति। १६।१।५ सायणः।

षोडशिसंस्थायां उत्तमे शस्त्रे परिधानीयायाः अन्तिमे वचने अन्तिमं चतुरक्षरं द्विरुक्त्वा प्रणुयात् 'सख्युः पदे सख्युः पदोऽऽऽम्' इति। २८।७।१–४.

षोडशिसाम गौरिवीतं विह्रते, नानदं अविह्रते। १६।१–२.

षोडशि स्तोत्रे एकविंशं साम तदीयतृचगतानामृचां आवृत्या सामगैर्गीयते। १४।२।२ सायणः।

षोडशी ज्योतिष्टोमस्य चतुर्थी संस्था। १५।५।१ सायणः।

संख्याविशेषः प्रातरनुवाके ऋचाम्। आयुष्कामस्य शतम्। यशस्कामस्य ३६०। प्रजापशुकामस्य ७२०। अब्राह्मणोक्तस्य दुरुक्तोक्तस्य शमलगृहीतस्य च ८००। स्वर्गकामस्य १०००। सर्वकामस्य अपरिमितं सहस्रादधिकम्। ७।७।१–११.

संग्रामजयार्थिनं शरणागतं पुरुषं प्रति अभिषिक्तक्षत्रियेण यत् कर्तव्यम्। ऐशान्यां दिशि एनं यातयेत्, जयति ह तं संग्रामम्। ३७।६।६.

संचरः = सम्यक् चरन्ति अनेन इति मार्गः। स द्विविधः संस्थितसंचरः विसंस्थितसंचरश्च। सवने समाप्ते सदसः पश्चिमद्वारेण निर्गच्छति सोऽयं संस्थितसंचरः। असमाप्ते तु सवने प्रागुद्वारेण निर्गच्छति सोऽयं विसंस्थितसंचरः। ऐआ. ५।१।१० सायणः।

संज्ञानं नाम सूक्तं 'कया शुभा सवयसः सनीळा' इति पञ्चदशर्चं, एतेन इन्द्रः अगस्त्यः मरुतः ते समजानत। २३।१।१३–१६. ऐआ. १।६।११। इदमेव संतनि सूक्तं संततिप्रदम्।

संधिस्तोत्रं रथंतरसाम्ना निष्पाद्यम्। १६।६।११.

संपातः नाम सूक्तं 'आ न इन्द्रो दूरात्' इति एकादशर्चं 'कथा महामवृधत्' इति च एकादशर्चम्। ऐआ. ५।८।३,६.

संपातसूक्तानि। मैत्रावरुणस्य प्रथमेऽहनि एवा त्वामिन्द्र, द्वितीयेऽहनि यन्न इन्द्रो जुजुषे, तृतीयेऽहनि कथा महामवृधत्। एतानि वामदेवस्यार्षम् अहरहःशस्यं च सद्यो ह जातो वृषभः इति। २९।३। ब्राह्मणाच्छंसिनः प्रथमेऽहनि इन्द्रः पूर्भिदातिरत्, द्वितीयेऽहनि य एक इद्धव्यः, तृतीयेऽहनि यस्तिग्मशृङ्गो, अहरहःशस्यं अस्मा इदु प्र तवसे। अच्छावाकस्य प्रथमेऽहनि इमामू षु प्रभृतिं, द्वितीयेऽहनि इच्छन्ति त्वा सोम्यासः, तृतीयेऽहनि शासद्वह्निर्दुहितुः, अहरहःशस्यं अभितष्टेव दीधया। २९।३.

संपातौ भवतः निष्केवल्यमरुत्वतीययोर्निविद्धाने आ यास्विन्द्रो, आन इन्द्रो इति। संपत्तिमाप्नुवन्ति आभ्या इति संपातौ। २०।२।२.

संप्रसर्पनं संप्राप्तिः गमनम्। द्वादशाहस्य दशमेऽहनि मानसग्रहे पत्नीशालायां आग्नीध्रे च। २४।६। ८,१४.

संभारा उत्तरवेद्यां गुग्गुलुः ऊर्णास्तुका सुगन्धितेजनं (वाळा) इति अग्निष्टोमे। ५।२।२८.

संभाराः ऐन्द्रमहाभिषेके। वानस्पत्यानि फलानि, नैयग्रोधानि औदुम्बराणि आश्वत्थानि प्लाक्षाणि (पिंपरणी) च। औषधानि तोक्मानि (मोड आलेलें धान्य) व्रीहीणां महाव्रीहीणां प्रियङ्गूणां यवानां च। आसन्दी औदुम्बरी। चमसः औदुम्बरः। पात्री औदु-

म्बरी। उदुम्बरशाखा अल्पीयसी आभिषेकार्यम्। दधि, मधु, सर्पिः, आतपवर्ष्या आपश्चेति। ३९।२-३.

संभाराः यज्ञाङ्गे राजाभिषेके। आसन्दी, व्याघ्रचर्म आसन्द्यामुपरि, चमसः, उदुम्बरशाखा अल्पीयसी। अभिषेकार्थे, दधि, मधु, सर्पिः, आतपवर्ष्या आपः, शष्पाणि, तोक्मानि, सुरा, दूर्वा चेति। ३७।१।३.

संयाज्या अग्नीषोमीय पशुपुरोडाशस्य, स्वदस्व हव्या समिषो। ६।९।९-१०। आतिथ्याया होतारं चित्ररथं, प्रयाममग्निः इति त्रिष्टुभौ। दीक्षणीयाया तेजस्कामस्य ब्रह्मवर्चसकामस्य च गायत्र्यौ स हव्यवाळमर्त्यः, अग्निर्होता पुरोहितः। आयुष्कामस्य उष्णिहौ अग्ने वाजस्य गोमतः, स इधानो वसुष्कविः। स्वर्गकामस्य अनुष्टुभौ त्वमग्ने वसून् इति द्वे। श्रीकामस्य यशस्कामस्य च बृहत्यौ एवा नो अग्निं इति द्वे। यज्ञकामस्य पङ्क्ती अग्निं तं मन्ये इति द्वे। वीर्यकामस्य त्रिष्टुभौ 'द्वे विरूपे चरतः' इति द्वे। पशुकामस्य जगत्यौ 'जनस्य गोपा.।' इति द्वे। अन्नाद्यकामस्य विराजौ 'प्रेद्धो अग्ने, इमो अग्ने' इति। एते एव विराजौ नित्ये। १।५।१-२५। प्रायणीयोदयनीययोः विराजौ त्रयस्त्रिंशदक्षरे 'सेदग्निरग्नीन्, सेदग्निर्यो' इति। २।४।४-७। सवनीयपुरोडाशाना 'हविरग्ने वीहि' इत्यनुसवनं यजति। ८।६।११-१२.

संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्। आश्व० ३।१।२१.

संवत्सरसत्राणां गवामयनं प्रकृतिः। १८।३।१ सायणः।

संवत्सरसत्रे प्रतिमास चत्वारः अभिप्लवाः षडहाः, पञ्चमस्तु पृष्ठ्यः षडहः। १८।२।६ सायणः।

संसर्गे अग्निसंसर्गे प्रायश्चित्तम्। अग्नौ अग्नेरुद्धरणे, गार्हपत्याहवनीययोः, त्रयाणामपि अग्नीनाम्, इतरेषामग्निभिः, ग्राम्येणाग्निना, दिव्येनाग्निना (विद्युता), आरण्येनाग्निना। ३२।५।१-४.

संसर्गेष्टिः 'आरण्येनाग्निना' इत्यत्र 'अग्नयः ग्राम्येण' इत्यत्र च शब्दे द्रष्टव्यम्। ३२।६।१.

संसवः। द्वयोर्बहूना वा यजमानानां एककाले सोमाभिषवः ससवः। स च महान् दोषः। तस्मिन्नेव देशे तस्मिन्नेव काले मत्सरप्रस्तैर्यजमानैः प्रवर्तितत्वात्। नद्या वा पर्वतेन वा व्यवधानरहितयोः परस्परमन्त्रध्वनिश्रवणयोग्ययोर्देशयोः स्पर्धमानाभ्यां प्रवर्तितयोः सोमयागयोरय संसवाख्यो दोषः। 'तदाहुः न पूर्वदीक्षिणः संसदोऽस्ति, (किंतु) अपरदीक्षिण एव। 'संवेशाय स्वोपवेशाय त्वा' इत्यादिमन्त्रेण संसवप्रायश्चित्ताहुतिः। १।३।२१.

संस्कारा दीक्षितस्य। स्नानं, अद्भिरभिषिञ्चन्ति। नवनीतेनाभ्यञ्जन्ति। अञ्जनं, 'आञ्जन्त्येनम्'। पावन एकविंशत्या दर्भपिञ्जूलैः। शालाप्रवेशः, दीक्षितविमितं प्रपादयन्ति। नियमविशेषः, दीक्षितविमिते एव आस्ते च चरति च, तस्माद् दीक्षितं नान्यत्र दीक्षितविमितात् आदित्योऽभ्युदियाद्वा अस्तमियाद्वा। अहत वासः, वाससा प्रोर्णुवन्ति, सहैव वाससा अभ्यवैति अवभृथम्, कृष्णाजिनमुत्तर भवति, उन्मुच्य कृष्णाजिनमवभृथमभ्यवैति। मुष्टी कुरुते। सत्यवदनम्। विचक्षणपदप्रयोगः अभ्यसबोधने, 'विचक्षण केशव' इत्यादि। १।३।१-६.

संस्थितयजुर्निषेधः (समिष्टयजुः) प्रायणीयायाम्। २।५।५-६.

संस्थितसंचरः। सवने समाप्ते सदयः पश्चिमद्वारेण। निर्गच्छन्ति, स मार्गः। ऐआ ५।१।१० सायणः।

संहिता- पद- प्रमाणा उपासनाः। ऐआ.। ३।१।६.

संहितोपनिषत्। संहितोपासना षड्विधा। ऐआ. ३।१-६.

सक्थि अधोभागः, ऊरुस्तु उर्ध्वभागः। ३१।१। २ सायणः।

सजनीयं नाम सूक्तं 'यो जात एव प्रथमो मनस्वान्' इति। अत्र प्रत्यृच 'स जनासः इन्द्र' इति विद्यते यस्मिन् तत् सूक्तं सजनीयम्। इद पष्ठे तृतीयेऽहनि निष्केवल्ये शस्ते। २ ।२।१-५.

सत्यवचा नामानेदिष्ठो मनुपुत्रः मनुश्च। तत्कथाः। २२।९.

सत्यवचनं दीक्षितसंस्कारः। १।६।६.

सत्यवचनविधिः पुरुषार्थः 'सत्यमेव वदितव्यम्'। २२।९।७.

सत्रिणां जीविका। 'अथातः पशोर्विभक्तिः' इत्यारभ्य कस्य ऋत्विजः कः पशुभागः स्यात् इति सविस्तर प्रतिपादितम्। ३१।१।१-२.

सत्रे उपसदः एकैकस्मिन् दिने द्विर्द्विः इति द्वादशदिनेषु अनुष्ठातव्याः। ४।६।७ सायणः। 'चतुर्विंशतिः संवत्सरे (गवामयने) इति आश्व० ८।८।१९.

सत्रे द्वादशाहे सन्दुप्य (एकत्र समोप्य) अग्नीन् यजेरन्। सर्वे दीक्षेरन्। सर्वे सुनुयुः। वसन्ते उदवसानीया कुर्युः। १९।४।१३.

सत्रे ये यजमानाः, त एव ऋत्विजः। १७।६।१ सायणः।

सत्रे सावत्सरिके पूर्वमुत्तरं चेति पक्षद्वयं मध्ये विषुवान्। तत्र पूर्वे पक्षसि षडहाद्यनुष्ठानं आरोहणक्रमेण उत्तरे तु प्रत्यवरोहणक्रमेण। १७।७।८। विश्वजिदहः अग्निष्टोमसंस्थम्। ३०।५।१ सायणः।

सदं तु पूर्ववंशः स्यात् इति पूर्वाचार्याः। २११।२ सायणः।

सदःप्रवेशः होतुर्महामते माध्यंदिने चित्याग्न्युपस्थानोत्तर मार्जालीय वामभागे अवस्थाप्य 'यथेतं सदः प्रसर्पति'। ऐआ ५।३।१.

सदःप्रवेशे 'पुरस्तादन्ये होत्रकाः सदः प्रसर्पन्ति पश्चा अच्छावाकः। १०।४।५.

सदः प्रसृप्य मेढ्रात् पश्चाद्देशे आसीनो होता वाणं शततन्तुं संनह्यति। ऐआ. ५।४।१-६.

सदसः प्रसृप्य तीर्थे मार्जयित्वा पत्नीशाला संप्रपद्य समन्वारभध्वं इत्युक्त्वा 'इह रम इह रमध्वं' इति शालामुखीये जुहोति द्वादशाहस्य दशमेऽहनि मानसग्रहे। २४।३।६-१३.

सदस्यस्य सव्यो बाहुः पशुभागः सत्रे। ३१।१।२.

सदस्याः अग्नयः नाम धिष्ण्याग्नयः आग्नीध्रात् विहरन्ति। १०।४।२.

सप्तदशः स्तोमः षडहे तृतीयेऽहनि। २१।१।१-३.

सप्तदशस्तोमस्य विष्टुतिः। १४।४।२ सायणः।

सप्तमेऽहनि होतुः षट्शस्त्राणि। २३।१-२.

सप्तहोतारः—होता, मैत्रावरुण, ब्राह्मणाच्छंसी, नेष्टा, पोता, आग्नीध्रः अच्छावाकश्चेति। ते च उन्नीयमानसूक्तगता एकैका पठन्ति। २८।१।८ सायणः।

समानोदर्कं यस्मिन् सूक्ते ऋक्षु प्रत्येकं एक एव चरणादिः पुनः पुनः पठ्यते, तादृशं सूक्तम्।२१।२।१७ सायणः।

समिदाधानम्। वाचं विसृज्य उपोत्थाय आहवनीये 'समिदसि समुद्वेद्क्षत्रेन्द्रियेण वीर्येण स्वाहा' इति समिदमभ्यादधाति यजमानः क्षत्रियः। ३७।५।८-१०.

समिष्टयजुः संस्थितयज्ञुर्नाम प्रायणीयायां निषिद्धः उदयनीया तु कृत्स्ना संतिष्ठते। २।५।५-६.

समुच्चयः देविकाना देवीनाच हविषा गतश्रियः प्रजातिकामस्य। धनकामस्य तु न समुच्चयः। १५।४।७.

समुद्र इव भूमिं पुरोहितः पञ्चभिर्मेनिभिः (क्रूरैः गोणैः) राजानं परिवृत्य तिष्ठति। ४०।२।१.

सर्पणं (गमनं) सदसः सकाशात् गार्हपत्ये होमार्थम्। २४।३।६। पत्नीशालायाः सकाशात् आग्नीध्रीये होमार्थम्। २४।३।१४। आग्नीध्रात् सकाशात् सदसि स्तोत्रार्थे उद्गातॄणाम्। २४।४।१.

सर्पराज्ञीभिर्ऋग्भिः उद्गातारः सदसि स्तुवन्ति दशमेऽहनि मानसग्रहे 'आऽयं गौः पृश्निरक्रमीत्' इत्यादिभिः (साम. ६३०-३२)।

सर्पस्य निर्देशिनः (दुर्तोडें) सुप्ति. सोमाहरणकाले गायत्र्या प्रक्षिप्तबाणस्य गायत्रीनखेन कुण्ठितादस्य सकाशात्। १३।२।३.

3135०.

सर्पिः ऐन्द्रमहाभिषेके चमसे पात्र्या वा अभ्यानेयः संभारः। ३९।२।७। यज्ञाङ् राजाभिषेके च।३७।१।३.

सवनत्रये होतुर्द्वे शस्त्रे। प्रातःसवने आज्यं प्रउगं च, माध्यंदिने मरुत्वतीयं निष्केवल्यं च, तृतीयसवने च वैश्वदेव अग्निमारुतं चेति। २८।५।७ सायणः।

सवनपङ्क्तिर्नाम पशुरुपवसथे (इत्येकं), त्रीणि सवनानि, पशुरनूबन्ध्यः (इति पञ्चमं) इति। ८।६।४.

सवनानामुत्पत्तिः। स्वर्गात्। सोममानयन्ती गायत्री सोमस्य यावन्तं भागं दक्षिणेन पदा समगृह्णात् तावत् प्रातःसवनमभवत्, यत् सव्येन पदा तत् माध्यंदिनं, अथ यन्मुखेन तत् तृतीयसवनम्। १३।३।१.

सवनीयः पशुः महाव्रते वैश्वकर्मणः द्विरूपः (पार्श्वयोः शुक्लवर्णः) ऋषभः। १८।८।८.

सवनीयः पशुः विषुवति सर्वश्वेतः सौर्यः।१८।५।५.

सवनीयपशुपुरोडाशप्रचारादूर्ध्वं तदङ्गेडोपाह्वानात् प्राक् द्विदेवत्यग्रहप्रचारः शेषाभक्षणान्तः, ततोऽवशिष्टं इडोपाह्वानं, ततः अवान्तरेडाप्राशनं, ततः होतृचमसभक्षणम्। ९।६।१-२.

सवनीयपशोः वपां सुत्यादिने प्रातःसवने हुत्वा हृदयाद्यङ्गानि पक्त्वा तृतीयसवने जुहति। ७।३।८ सायणः।

सवनीयपशोः वैश्वकर्मणस्य ऋषभस्य ऐतरेयिणां आभेयेन समुचितस्य प्रोक्षणादूर्ध्वं अध्वर्युणा प्रेषितो होता सामिधेनीरनुब्रूयात् मतामते। ऐआ ५।१।१.

सवनीयपुरोडाशा अनुसवनं धानाः करम्भः परिवापः पुरोडाशः पयस्या चेति पञ्च। हविष्पङ्क्तिर्नाम इयम्। तत्र भृष्टा यवतण्डुला धानाः, धानापिष्टं जलसंयुतं करम्भः। व्रीहीणां लाजाः परिवापः, पयस्या आमिक्षा। ८।६।१.

सवनेषु त्रिषु मन्द्रया वाचा प्रातःसवने, बलीयस्या माध्यंदिने, बलिष्ठतमया तृतीयसवने। १४।६।५.

सहचराणि एतानि नामानेदिष्टं, वालखिल्याः, वृषाकपिः, एवयामरुत् इति चत्वारि। २२।१०।१-४.

सांनाय्यं सायं दुग्धं यदि केशकीटादिना दुष्येत्, कश्चिदपहरेद्वा, तदा प्रातर्दुग्धं द्वैधं कृत्वा अन्यतरत् आतच्य उभाभ्यां यजेत्। ३२।३।१। यदि प्रातर्दुग्धं दुष्येद्वा अपह्रियेत वा, तदा तस्य स्थाने ऐन्द्रं माहेन्द्रं वा पुरोडाशं निर्वपेत्। २। यदि उभयं दुष्येद्वा अपह्रियेत वा प्रातवत् कुर्यात्। ३.

सांनाय्ये अधिश्रिते यजमानमरणे 'अधिश्रिते' इति शब्दे द्रष्टव्यम्। ३२।१।२.

साकमश्वं प्रमंहिष्ठीयं वा साम उक्थ्यस्तोत्रनिष्पादकम्। तयोरैच्छिको विकल्पः। १५।५।८-१०.

साकमश्वं साम 'एह्यू षु ब्रवाणि ते' (साम ७) इत्यस्यामृचि उत्पन्नम्। प्रमंहिष्ठीयं 'प्रमंहिष्ठाय गायत' (साम. १०७) इत्यस्यामृचि। १५।५।७ सायणः।

सामगाः 'अग्न आ याहि' (साम १) इत्याद्याग्नेयीषु स्तुवते, होता तु 'वायवा याहि' इति वायव्यया प्रतिपद्यते प्रउगे। ११।४।१-११.

सामगाः 'उपास्मै गायत' (साम. ६५१) इत्यादिगायत्रीषु स्तुवते, होता 'प्र वो देवाय' इत्यानुष्टुभं आज्यं शंसति। १०।५।८-११.

सामगाः पावमानीषु स्तुवते, होता आग्नेयं आज्यं शंसति (आज्यवत्)। १०।५।४-७.

सामगाः माध्यंदिनपवमाने 'उच्चा ते जातमन्धसः' इति (साम ६७२-७४) गायत्रीषु माध्यंदिनपवमानेन स्तुवते। 'पुनानः सोम' इति (साम ६७५-७६) द्वे प्रग्रथनेन तिसृषु बृहतीषु रौरवं साम, पुनः तास्वेव तिसृषु यौधाजयं साम गायन्ति इति बृहत्यः षट् भवन्ति। ततः 'प्र तु द्रव' इति (साम ६७७-७९) तिसृषु त्रिष्टुप्सु स्तुवते। १२।६।४ सायणः।

सामतो भ्रेषे प्रायश्चित्तं 'स्वःस्वाहा' इति आहवनीये ब्रह्मा जुहोति। २५।७।५.

सामप्रगाथः निष्केवल्ये शस्त्रे छन्दोमप्रथमेऽहनि 'पिबा सुतस्य रसिनः'। छन्दोमद्वितीयेऽहनि 'उभयं शृणवच्च नः'। २३।२।२४। छन्दोमतृतीयेऽहनि 'इन्द्र त्रिधातु शरणं' इति। २४।१।२२.

सामप्रगाथः निष्केवल्ये शस्त्रे षडहे। प्रथमेऽहनि 'पिबा सुतस्य रसिनः' इति। २०।१।१५। द्वितीयेऽहनि 'उभयं शृणवच्च नः' इति। २०।३।१३। तृतीयेऽहनि इन्द्र त्रिधातु शरणम्। २१।१।२१। चतुर्थेऽहनि 'त्वमिन्द्र प्रतूर्तिषु'। २१।४।२२-२३। पञ्चमेऽहनि 'मो षु त्वा वाघतः'। २२।२।८। षष्ठेऽहनि 'इन्द्र मिद्देवतातये'। २२।३।१-३.

सामानि पृष्ठ्ये षडहे अहःसु क्रमेण रथंतरं, बृहत्, वैरूपं, वैराजं, शाक्वरं, रैवतं इति। समाधारभूतानि छन्दांसि च क्रमेण गायत्री, त्रिष्टुप्, जगती, अनुष्टुप्, पङ्क्तिः,

अतिच्छन्दाः इति । १९।६।५ सायणः ।

सामानि विषुवति अहनि महादिवाकीर्त्यं पृष्ठं (विभ्राड् बृहत् पिबतु सोम्य इत्यत्र), विकर्णं ब्रह्मसाम (पृक्षस्य वृष्णो अरुषस्य इत्यत्र), भासं अग्निष्टोमसाम (पृक्षस्य वृष्णो इत्यत्रैव), बृहद्रथंतरे पवमानयोः (माध्यंदिनार्भवयोः) भवतः । १८।५।२.

सामावयवाः पञ्च पाञ्चभक्तिके हिंकारः, प्रस्तावः । उद्गीथः, प्रतिहारः, निधनं इति । साप्तभाक्तिके तु उद्गीथात् प्राक् आदिः, प्रतिहाराच्च प्राक् उपद्रवः इत्यधिकौ । भक्तिः अवयवः । १२।१२।४.

सामिधेन्यः । उपसत्सु उपसद्याय मीढुषे इति तिस्रः पूर्वाह्णे । इमां मे अग्ने समिधमिमामुपसदं इति तिस्रः अपराह्णे । ४।८।७ । दर्शपूर्ण मासयोः प्र वो वाजा अभिद्यवः इत्याद्याः पञ्चदश । १४।२।४ । दीक्षणीयायां पृथुपाजा, सं समाधो इति द्वे धाय्ये इति सप्तदश । ११।११।१३-१५ । द्वादशाहे दीक्षणीयायाः पूर्वं कर्तव्ये प्राजापत्ये पशौ सप्तदश । १९।४।५ । विषुवति सवनीये पशौ समिद्धो अग्न आहुतः इत्यतः प्राक् पृथुपाजा इत्यादयः षड् धाय्याः इति एकविंशतिः । महाव्रते 'एकविंशतौ प्रागुपोत्तमायाः समिधाऽग्निं इति चतस्रः अधिकाः इति पञ्चविंशतिः । यदि वैश्वकर्मणः पशुः सवनीयपशुभिः समुच्चीयेत तदैव तत्र पशौ पञ्चविंशतिः; अन्यदा तु तत्र पक्षान्तरे सप्तदशैव । ५।१।२ सायणः ।

सार्पराज्याः ऋक्षु 'आयं गौः पृश्निः' इत्याद्यासु स्तुयते उद्गातारः सदसि संसृप्य द्वादशाहस्य दशमेऽहनि मानसग्रहे । २४।३।१-५.

सार्वसंनियज्ञः (सार्वसेनियज्ञः इति नामान्तरम्) नाम दर्शपूर्णमासविकृतिरूपः यागः । १४।२।९ सायणः ।

सावित्रं सूक्तं वैश्वदेवशस्त्रे । छन्दोमप्रथमेऽहनि 'अभि त्वा देव सवितः' तृचं गायत्रम् । २३।२।७, १२ । छन्दोमद्वितीयेऽहनि 'हिरण्यपाणिमूतये' चतुर्ऋचं गायत्रम् । २३।४।९ । छन्दोमतृतीयेऽहनि 'दोषो आगात्' तृचः - गायत्रः (सौतः) । २४।२।१० । षडहे प्रथमेऽहनि 'युञ्जते मन उत' सूक्तम् । २०।२।४। द्वितीयेऽहनि 'उदु ष्य देवः सविता' सूक्तम् ।२०।३।२। तृतीयेऽहनि 'तद्देवस्य सवितुर्वार्यं' सूक्तम् । २१।२। ७-८ । चतुर्थेऽहनि 'आ देवो यातु सविता' तृचः। २१।५।७। पञ्चमेऽहनि 'उदु ष्य देवः सविता' तृचः । २२।२।७। षष्ठेऽहनि 'उदु ष्य देवः सविता' सूक्तम् । २२।८।९.

सावित्रं सूक्तं वैश्वदेवशस्त्रे निविद्धानं अग्निष्टोमे तृतीयसवने 'अभूद्देवः सविता' । प्रयोगः ।

सावित्रग्रहस्य याज्या 'दमूना देवः सविता' । नानुवषट् करोति, न भक्षयति । १३।५।४.

साह्नः क्रतुर्नाम एकाहः । १४।६।१.

सिनीवाली या पूर्वा अमावस्या (सा दृष्टेन्दुः सिनीवाली इत्यमरः) । ३२।९।२.

सुकीर्ति काक्षीवतं सूक्तं वैश्वदेवशस्त्रे षष्ठेऽहनि 'अप प्राच इन्द्र' इति । २२।१०।४.

सुगन्धितेजनानि तृणविशेषः, यस्य मूलानि घर्मकाले पानीयमध्ये स्थाप्यन्ते (वाळा) । ५।२।२८ सायणः ।

सुत्या द्वादश द्वादशाहे । १९।२।४.

सुत्वा कैरिशिः (किरिशस्यापत्यं) भार्गायणः । तस्य शत्रुभूताः पञ्च राजानः सुत्वकृतपरिमरमन्त्रपाठात् परिमम्रुः । ४०।५।१८.

सुदाः पैजवनः उदाहरणं ऐन्द्रमहाभिषेकफलप्राप्तौ । ३०।७।११.

सुपर्णस्य (पक्षिणः) उत्तरः पक्षः एकेन पर्णेन ज्यायान् । ऐआ १।८।४.

सुपर्णस्य प्रत्यञ्चि पत्राणि एकविंशतिर्भवन्ति । ऐआ १।८।६.

सुब्रह्मण्या ऋत्विक् । तस्य सुब्रह्मण्याख्यमन्त्रपठनेन देवताऽऽह्वानं, तदेव सुब्रह्मण्याऽऽह्वानं इति । २६।३। १-७, १२.

सुब्रह्मण्या दक्षिणासु नीतासु ता दक्षिणा अनु संतिष्ठते (कर्मसमाप्तिर्भवति) अग्निष्टोमे । २६।३।१२.

सुब्रह्मण्यायाः शिरः पशुभागः सत्रे । ३१।१।२.

सुब्रह्मण्यायै ऋषभं दक्षिणां अभ्याजन्ति (ददति) । २६।३।७.

सुब्रह्मण्याऽऽह्वानम् । राजनि क्रीते सुब्रह्मण्यामाह्वयति उत्करे तिष्ठन् ( मन्त्रं पठति ) । २६।३।१-७.

सुरभिमती इष्टिः 'जीवति मृतशब्दे' इत्यत्र द्रष्टव्यम् । ३२।८।७.

सुरां पिबेत् क्षत्रियो ऐन्द्रमहाभिषेके 'यदत्र शिष्टं रसिनः' इत्यादिमन्त्रेण । ३९।६।४-५.

सुराकंसं आचार्यः राजहस्ते आदधाति ऐन्द्रमहाभिषेके 'स्वादिष्ठया मदिष्ठया' इति । ३९।६।३ । यज्ञाङ्गराजाभिषेके च । ३७।४।८-९.

सुरा यज्ञाङ्गराजाभिषेके संभारः चमसे प्रक्षिप्ता । ३७।१।७.

सुराप्रेपदानं पानोत्तरं मित्राय यज्ञाङ्गराजाभिषेके । ३७।४।१३-१४.

सूक्तं ऋक्, अर्धर्चः, पादः, अक्षरं इति सर्वं प्राण एव । २०।१०।६-११.

सूक्ष्मदेहदृष्टया महाव्रतगतनिष्केवल्यशस्त्रस्य उपासना । अहंमहोऽस्मि । ऐआ. २।४-२०.

सूच्यः ( काष्ठमयः कीलाः ) प्रेङ्खस्य फलकयोः संधानहेतवः सूक्ष्माग्राः तिस्रो रेखा । महाव्रते । ऐआ. ५।३।५.

सूतकान्नभक्षणे प्रायश्चित्तं आहिताग्नेः । अग्नये तन्तुमते अष्टाकपालं निर्वपेत् । तन्तुं तन्वन् रजसः, अक्षानहो नह्यत इति याज्याऽनुवाक्ये । आहुतिं वा आहवनीये जुहुयात् 'अग्नये तन्तुमते स्वाहा' इति । ३२।८।६.

सूददोहाः नाम ऋक् 'ता अस्य सूददोहसः' इति । ऐआ. १।१७।१.

सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन् । चरैव । ३३।३।५.

सूर्यास्तमये उद्धरणाभावे हिरण्यं पुरस्कृत्य सायं अग्निमुद्धरेत् । ३२।११।२.

सूर्यास्तमये सूर्योदये च दीक्षितस्य दीक्षितविमितात् ( विमितं मण्डपः कुटी) विशेषतो बहिर्गमनं निषिद्धं, तत्प्रसङ्गे च अन्यैर्दीक्षितः प्रबोधनीयः । १३।३।१२-१४.

सूर्योदये उद्धरणाभावे रजतमन्तर्धाय (उपरि धृत्वा) प्रातः अग्निमुद्धरेत् । ३२।११।१-२.

सोमं राजानं क्रीणन्ति अग्निष्टोमे । १४।२।५.

सोमक्रयणं प्राच्याम् । ३।१।१ । शकटे प्राङ्मुखे तिष्ठति सोममादधाति । शकटं दक्षिणा परिवहन्ति, प्रत्यञ्चमावर्तयन्ति, उदङ्मुखात् तिष्ठतः शकटात् सोमं उपावहरन्ति सोमोपावहरणं ऐशान्याम् । ३।३।५-७.

सोमक्रयणी आख्यायिका । ५।१।१.

सोमक्रयणी वत्सतरी अस्कन्ना ( गर्भधारणात् प्राक्तनी ) । तां पुनर्निष्क्रीणीयात् । ५।१।२३.

सोमक्रयमन्त्रेषु मन्द्रः स्वरः । 'उपांशु वाचा चरितव्यम्' । ५।१।४.

सोमपा देवाः त्रयस्त्रिंशत् अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्याः, प्रजापतिश्च, वषट्कारश्चेति । ७।८।८.

सोमप्रशंसा । सोमेन त्रयस्त्रिंशद्देवान् सोमपान् प्रीणाति । ७।८।८.

सोमप्रोहणानुवचनीयाः अष्टौ ऋचः । ( प्रोहणं शकटेन नयनम् ) । आदौ प्रैषः 'सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि' इति । 'भद्रादभि श्रेयः प्रेहि' ऋक्, 'सोम यास्ते मयोभुवः', तृचः, 'सर्वे नन्दन्ति' यशसा' ऋक्, 'अगन् देव' ऋक्, 'या ते धामानि' ऋक्, 'इमां धियं शिक्षमाणस्य' इत्यष्टमी परिधानीया । त्रिः प्रथमा त्रिरुत्तमा ( इति द्वादश स्युः ) । ३।२।१-३५.

सोमविक्रयिणः प्रत्यवायः । पापो हि सोमविक्रयी । ३।१।२.

सोमस्य शकटादवरोहणम् । अन्यतरोऽनड्वान् युक्तः, अन्यतरो विमुक्तः अथ ( तदा ) राजानमुपावहरेयुः । ३।३।१-४.

सोमस्य स्विष्टकृत् नास्ति । तस्य अनुवषट्कारेण सिद्धिः । ४।५।६.

सोमाहरणकथा । सोमः छन्दोभिः (पक्षिरूपं धृत्वा) आनीतः । तत्रापि गायत्र्यैव । सोमपालान् भीषयित्वा अमुष्मात् लोकादानीतः । १३।१-२.

सोमे हविर्धानं ( मण्डपं ) प्राप्यमाणे अग्नीषोमप्रणयनीयासु पञ्चदशीं 'अन्तश्च प्रागादादितिर्' इति अन्वाह । ५।४।२०.

सोमे हविर्धानसमीपवर्तिनि सति अग्नीषोमप्रणयनीयासु षोडशीं 'श्येनो न योनि' इत्यन्वाह ।५।४।२१.

सोमो ब्राह्मणानां भक्षः, न क्षत्रियवैश्ययोः। ३५।३।२. (तयोस्तु सोमस्थाने न्यग्रोधादीनां फलानि)।

सोमो राजा जयहेतुः । ३।३।६-७.

सौपर्णं आख्यानम् । सुपर्णानां पक्षिरूपाणां छन्दसामिदम् । तत्र जगतीवृत्तान्तः । १३।१।२ । त्रिष्टुप्वृत्तान्तः ।३। गायत्रीवृत्तान्तः ।३। गन्धर्वेण युद्धम् ।४.

सौपर्णं सूक्तं 'इमानि वां भागधेयानि' यद्वा 'प्रधारयन्तु' इति गृह्योक्तं सूक्तम् । ( प्रधारयन्तु इति सायणपाठः ।३७।६।४) । २९।६।७ सायणः ।

सौम्यचरोः याज्या सौमी 'त्वं सोम पितृभिः संविदानः' इति । ११।८।१.

सौम्यचरौ बहुलघृतात्के होता छन्दोगेभ्यः प्राक् स्वात्मानमवेक्षेत । छन्दोगाः पूर्वमवेक्षेरन् इति के चित्, तन्न । ११।८।५.

सौम्ययागः मध्ये,अभितश्च आज्ययागौ अग्निष्टोमे। ११।८।१-६.

स्कन्नप्रायश्चित्तं 'अग्निहोत्रं' इति शब्दे द्रष्टव्यम् । ३२।२।४.

स्खलनं बिन्दुपतनं, साकल्येन द्रव्यपतनं तु भ्रंशः। तत्र प्रायश्चित्तं 'अग्निहोत्र' इति शब्दे । ३२।४।६ सायणः ।

स्तोकानुवचनीयाः वपायां ( अग्नौ संतापनकाले ) स्तोकेषु उत्पन्नेषु 'इमं नो यज्ञं' इति सूक्तं पञ्चर्चं पठेत् । आदौ प्रैषस्तु 'स्तोकेभ्योऽनुब्रूहि' इति । ७।२।१-२। स्तोकप्रशंसा । ७।२।१८.

स्तोत्रं सार्पराज्ञ्याः ऋक्षु 'आयं गौः पृश्निरक्रमीत्' इत्याद्यासु । सदः संप्रपद्य यथायथं अन्ये ऋत्विजः व्युत्सर्पन्ति, संसर्पन्ति उद्गातारः, सार्पराज्ञ्याः ऋक्षु स्तुवते । द्वादशाहस्य दशमेऽहनि मानसमहे । मनसा प्रस्तौति, मनसा उद्गायति, मनसा प्रतिहरति । २४।४।१-५.

स्तोत्रशस्त्रयोः विशेषः क्षत्रियाग्निष्टोमे । प्रातःसवनमैकाहिकं तृतीयसवनं च । माध्यंदिनं ▮ उभयसाम्नः बृहत्पृष्ठस्य यत्, तदेव । मरुत्वतीयं निष्केवल्यम् । होत्रका ऐकाहिकाः । ३६।१-४.

स्तोत्रियः तृचः निष्केवल्ये मध्यमया वाचा । 'अभि त्वा शूर नोनुमः' इति प्रगाथे ऋग्द्वयस्य पादाष्टके प्रग्रथनेन । तेन बृहतीत्रयं संपद्यते । प्रग्रथनं तु प्रथमा बृहती एकदा यथापाठं, पुनः चतुर्थपादं द्विरावर्त्य द्वितीयस्याः सतो बृहत्याः प्रथमद्वितीयौ पादौ संयोज्यौ सा द्वितीया बृहती संपद्यते । पुनश्च द्वितीयस्याः ऋचः द्वितीयं पादं द्विरावर्त्य तृतीयचतुर्थपादौ संयोजनीयौ सा तृतीया बृहती संपद्यते इति ।

स्तोत्रियः तृचः राजनसाम्नः 'तादिदास भुवनेषु, वावृधानः शवसा, त्वे क्रतुमपि वृञ्जन्ति' । ऐआ. ११२।११-१३.

स्तोत्रियः सामाधारः ऋक्त्रयात्मकः । येन तृचेन सामगाः स्तुवन्ति, स स्तोत्रियः । स एव शस्त्रे प्रतिपत् भवति । १२।१२।१.

स्तोत्रियः नवर्चः निष्केवल्ये शस्त्रे पञ्चमेऽहनि, 'विदा मघवन् विदा' इति महानाम्न्यः नाम । २१।२।१-४। मन्त्रास्तु । ऐआ. ४।१।१–९.

स्तोत्रियः प्रगाथः बृहतः प्रतिपत् छन्दोमतृतीयेऽहनि 'त्वामिद्धि हवामहे' । २४।१।२१ । द्वितीयेऽहनि च । २०।३।११.

स्तोत्रियः बहिष्पवमानस्य 'उपास्मै गायता नरः'। १२।३।११। माध्यंदिनपवमानस्य 'उच्चा ते जातमन्धसः'। १२।२।३। आर्भवस्य 'स्वादिष्ठया मदिष्ठया' ।१२।३।३.

स्तोत्रियः यज्ञायज्ञीयस्य 'यज्ञायज्ञा वो अग्नये'। १२।३।४.

स्तोत्रियः चतुर्विंशाख्ये गवामयनस्य द्वितीयेऽहनि त्रीणि न शतानि षष्टिश्च । १७।६।७-९.

स्तोत्रियानुरूपकरणम् । यः श्वः स्तोत्रियः, सोऽद्य अनुरूपः क्रियते प्रातःसवने । २९।१।१–२.

स्तोमः षडहे प्रथमेऽहनि त्रिवृत् । २०।१।१–२ ।

द्वितीयेऽहनि पञ्चदशः। २०।३।१-२। तृतीयेऽहनि सप्तदशः। २१।१।१-३। चतुर्थेऽहनि एकविंशः २१।४।१-२। पञ्चमेऽहनि त्रिणवः। २२।२।२-५। षष्ठेऽहनि त्रयस्त्रिंशः। २२।७।१.

स्तोमविवृद्धौ अतिशंसनं प्रातःसवने एकस्याः द्वयोर्वा ऋचोः इति नियमः। माध्यंदिने एकस्याः द्वयोः अपरिमितानां वा, तृतीयसवने तु अपरिमितानामेव। २७।५।७-८, २९।७।१०-११.

स्तोमविवृद्धौ आवपनीयानि सूक्तानि। को अद्य नर्यो देवकामः इति मैत्रावरुण आवपेत, यनेन वायो न्यधायि इति ब्राह्मणाच्छंसी, आ याह्यर्वाङुप इति अच्छावाकः। २९।२।१०-११.

स्तोमाः सर्वे चतुर्विंशे उपव्यपक्षे चतुर्विंशाः, अग्निष्टोमपक्षे तु पवमानेभ्य इतरे सर्वे चतुर्विंशाः। १७।६।१, ८-९.

स्त्रियां गवि वा यमलजनने प्रायश्चित्त 'यमलजनने' इति शब्दे द्रष्टव्यम्। ३२।८।८.

स्थाली उपवसनीया पशुसमप्रयोगे। ६५।६।४.

स्थाल्यां प्रायणीयायाः निष्काशे वा उदयनीयायाः निर्वापः। २५।७ ८.

स्नानं तीर्थे दीक्षितवस्त्राणां। १।३।२-३.

स्थूणौ द्वौ स्तम्भौ होतृसदनमभितः दक्षिणोत्तरौ निखातौ स्याता अमवभिन्नौ। तयोरुपरि प्रेङ्खस्य बीजवः स्थापनीयः महाव्रते। ऐआ. ५।३।१.

स्थूलदेहदृष्ट्या महाव्रतगतनिष्केवल्यशस्त्रस्य उपासना। अर्भ्रोऽध्याय। ऐआ. २।१।२।१-२.

स्रुक् यदि भिद्येत अन्या संस्कृत्य ग्राह्या। भिन्ना तु प्राग्दण्डा प्रत्यक्पुष्करा आहवनीये अभ्यादध्यात्। (पुष्करं = टवळें इति भाषा)। ३२।४।७.

स्रुवेण औदुम्बरेण तिस्र आहुतीर्जुहोति होता महाव्रते मरुत्वतीये शस्त्रे समाप्ते। 'अनु मामिन्द्रो, मादित्या मा विश्वे, विश्वे मा विश्वे' इति ऋग्भिः। ऐआ. ५।१।१०-१३.

स्रुवेण औदुम्बरेण नव आहुतीः स्रुवा च चतुर्दशेन दशमीं होता महाव्रते माध्यंदिने अन्तर्शस्त्रहोमोत्तर। जुहोति। 'अग्निरिवानाधृष्यः' इत्यादिभिर्नवभिर्मन्त्रैः 'यदग्न एषा समितिः' इति ऋचा च। ऐआ. ५।१।१४-२५.

स्रुवेण वपामभिघारयन् अध्वर्युराह 'स्तोकेभ्योऽनुब्रूहि' इति प्रैषम्। ७।२।१-२.

स्वप्ने मरणसूचकानि अरिष्टानि दृश्यन्ते। तानि यथा, 'अथ स्वप्नाः, पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति, वराह एनं हन्ति, मर्कट एनमास्कन्दयति, आशु वायुरेनं प्रवहति, सुवर्णं खादित्वा अपगिरति, मधु अश्नाति, कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो याजयति।' ऐआ. ३।१०।१६-१७। एवं स्वप्ने दृष्टे न चिरमिव जीविष्यति इति विद्यात्। ऐआ. ३।१०।७.

स्वरः उच्चैः। उच्चैः पुरोरुचं शंसति। १०।७।६.

स्वरः। उपांशु तूष्णींशंसं शंसति। १०।७।२.

स्वरः। उपांशु वाचा चरितव्यं सोमे राजनि क्रीते। ५।१।४.

स्वरः मध्यमः निष्केवल्यस्य स्तोत्रिये तृचे, अनुरूपे तत. उच्चैस्तरामिव, धाय्याया नीचैस्तरामिव, प्रगाथः स्वरवत्या वाचा शंस्य., निविद्धानं सूक्त प्रतिष्ठिततमया वाचा (अल्पेन ध्वनिना) शंस्तव्यम्। १२।१३।२-१३.

स्वरसामानः गवामयने विषुवतः प्राक् परस्ताच त्रयस्त्रयो भवन्ति। ते च शतदशा उक्थ्याः। १८।४।५-८.

स्वरुप्रहरणं अग्नौ यूपप्रहरणस्य प्रतिनिधिः पशुकामस्य। ६।१।८.

स्वरूपं अग्नीषोमीयस्य पशोः। द्विरूप. इति के चित्। पीता स्यात् इत्येव सिद्धान्तः। ६।३।१०.

स्वर्गकामस्य अग्निष्टोमे प्रातरनुवाके ऋचा सहस्रमनूच्यम्।७।७।८.

स्वर्गकामस्य खादिरो यूपः। ६।१।५.

स्वर्गकामस्य यूपं प्रहरेत् अग्नौ। ६।१।५-७.

स्वस्त्ययनं 'प्र, आ' इत्युपसर्गद्वयम्। क्षेमेण सोमं ॥ आप्नुहि इति प्रथमस्य.अर्थः। क्षेमेण आगच्छ

इति द्वितीयस्यार्थः । परिपूर्णोऽयं महान् आशीर्वादः । योऽस्य प्रियः स्यात् तमेतेनानुमन्त्रयेत 'प्र' इति च, आ' इति च । १३।२।१.

स्वाहाकृतयः नाम विश्वेदेवाः । ७।२।३–५.

स्विष्टकृत् अग्नीषोमीयस्य पशोः वनस्पतियागोत्तरं इडोपाह्वानात् प्राक् । ६।१०।११.

स्विष्टकृत् सोमस्य घर्मस्य वाजिनस्य च नास्ति । अनुवषट्कारेणैव तस्य सिद्धिः । ४।५।६.

स्विष्टकृद्याज्या पशुपुरोडाशस्य 'स्वदस्व हव्या समिषः' इति । ६।९।९–१०.

हंसवती ऋक्' हंसः शुचिषद् वसुः' इति । १८।६।४–५.

हंसवत्या ऋचः सप्तधा पठनं दूरोहणं नाम । पच्छः अर्धर्चशः ,त्रिपदा, ऋक्शः,अनवानं, त्रिपदा, अर्धर्चशः, पच्छ इति । २९।९।१.

हरिश्चन्द्रोपाख्यानम् । ३३।१–६.

हविः दीक्षणीयायां आग्नावैष्णवः पुरोडाशः एकादशकपालः । घृते चरुर्वा योऽप्रतिष्ठितो मन्येत । १।१।२।८–११

हविः प्रायणीयोदयनीययोः । अदितेश्चरुः । २।५। १३–१४ । इतरेषां चतुर्णामाज्यम् । ( आश्व० ६।१४।३ )

हविःषु अधिश्रितेषु दर्शादौ यजमानमरणे याभ्य एव देवताभ्यो हवींषि गृहीतानि भवन्ति, ताभ्यः स्वाहा ( अग्नये स्वाहा इति रीत्या ) इति आहवनीये सर्वहुन्ति जुहुयात् । ३२।१।३.

हविर्दोषादिविषये प्रायश्चित्तम् । यस्य सर्वाण्येव हवींषि दुष्येयुर्वा आपहरेयुर्वा, आज्यस्य एतानि यथादेवतं परिकल्प्य तया आज्यहविषा इष्टया यजेत, अतः ( ऊर्ध्वं ) अन्यामिष्टिं अनुल्बणा ( उल्बणरहिता दोषरहिता यथाशास्त्रं ) तन्वीत । ३२।३।४ । अग्निहोत्रहविर्विषये अग्निहोत्रशब्दे द्रष्टव्यम् । ३२।४।१.

. हविर्धानं सोमे प्राप्यमाणे अग्नीषोमप्रणयनीयासु पञ्चदशी 'अन्तश्च प्रागा अदितिर्' इत्यन्वाह । ५।४।२०.

हविर्धान-( शकट-) प्रवर्तनीया ऋचः अष्टौ । तत्र प्रथमा अन्तिमा च त्रिस्त्रिः इति द्वादश । आदौ प्रैषः 'हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहि' इति । युजे वा ब्रह्म ऋक्, प्रेतां यज्ञस्य इति तृचः, यमे इव यतमाने ऋक्, अधि द्वयोरदधाः ऋक्, विश्वा रूपाणि प्रति इत्यनया रराट्याः ( द्वारस्य उपरिस्थितःतिर्यक्काष्ठस्य ) ईक्षणं कर्तव्यं, परि त्वा गिर्वणो गिरः इति अष्टम्या परिदधाति । सा च हविर्धानसंपरिश्रयणान्ते, तत्रापि मेथ्योर्निहननकाले । ५।३।२–२४.

हविर्धानसमीपवर्तिनि सति सोमे अग्नीषोमप्रणयनीयासु षोडशीं 'श्येनो न योनिं' इत्यन्वाह । ५।४।२१.

हविष्पङ्क्तिः नाम धानाः, करम्भः, परिवापः, पुरोडाशः, पयस्या चेति हविष्पञ्चकम् ।८।६।१–१३..

हिं इति हिंकारः निष्केवल्यशस्त्रस्य आदौ उच्चार्य. ततो व्याहृतयः, ततश्च प्रतिपत् वक्तव्या महाव्रते । ऐआ. १।९।१–६.

हिंकारः सामावयवः प्रथमः 'हिंऽऽऽम्' इति शब्दः उद्गात्रा पठनीयः ।१२।१२।४ सायणः ।

हिरण्यं रूपं ( सौन्दर्यवर्धकम् ) ।३३।१।८.

हिरण्यनाशे प्रायश्चित्तम् । अग्नये हिरण्यवते अष्टाकपालं निर्वपेत् । हिरण्यकेशो रजसो, आ ते सुपर्ण अभिनन्त इति याज्याऽनुवाक्ये । आहुतिं वा आहवनीये, जुहुयात् अग्नये हिरण्यवते स्वाहा इति । हिरण्यवती नाम इष्टिरियम् ।३२।८।४.

हिरण्यस्य प्रतिनिधिः आज्यम् ।७।५।६.

हृदयं ब्रह्म इति आरुणयः नाम ऋषयः उपासते । ऐआ. २।४।५.

होता अग्निष्टोमसंस्थे विश्वजिति तृतीयसवने वैश्वदेवशस्त्रे नामानिर्दिष्टं शंसति, न माध्यंदिने । ३०।५।१.

होता अग्निष्टोमे उत्तमे शस्त्रे परिधानीयायाः उत्तमे वचने उत्तमं चतुरक्षरं द्विरुक्त्वा प्रणुयात् 'यज्जारित्रे यज्जरित्रोऽऽऽम्' इति ।२८।७।१३.

होता अध्वर्युं उक्थदोहं याचयति अयुद्धत्वे, युद्धत्वे तु अध्वर्युः स्वयं पठेत् होतुरपोत्तरम् । महाव्रते

निष्केवल्योत्तरम् । ऐआ. ५।१२।६.

होता अध्वर्युं पृच्छति 'अवेरपोऽध्वर्यो३३३' इति । एकधनासु होतृचमसे समवनीतासु । ८ । २ । १०-११.

होता अन्तर्यामग्रह आभिमन्त्रयेत 'अपानं यच्छ स्वाहा त्वा सुहव सूर्याय' इति । तमपानेन (श्वास मुञ्चेत्) 'अपानापान मे यच्छ' इति ।८।३।१.

होता आज्यशस्त्र शसति ऋतुग्रहभक्षणादूर्ध्वम् । ऐआ. १।१।१ सायणः ।

होता आनुष्टुभ आज्यं शसति, सामगास्तु गायत्रीषु स्तुवते । १०।५।८-११.

होता उपांशुग्रह अभिमन्त्रयेत 'प्राण यच्छ स्वाहा त्वां सुहव सूर्याय' इति । तमभि प्राणेत् (ग्रहसमीपे स्वमुखं नीत्वा उच्छ्वसेत्) 'प्राण प्राण मे यच्छ' इति । ८।३।३.

होता एक एव स्यात् प्रायणीयोदयनीययोः । २।१।२.

होता चित्याग्निप्रदेशात् सदः प्रसृप्य प्रेङ्खात् पश्चात् भूमौ आसीनः औदुम्बर वाणं शततन्तुं (वाद्यविशेष) उभाभ्यां हस्ताभ्यां उत्तरत (उभे) धारयति यथा वीणाम् । ततश्छन्दोभिः चतुरुत्तरैः वाणस्य स्थानानि (षड्जादिस्वरस्थानानि) उर्ध्वं उद्ग्रहणीयात् (चिह्नानि कृत्वा निश्चिनुयात्) दशभिर्वा । 'गायत्रेण त्वा छन्दसा उद्ग्रहणामि' इत्यादिभिः 'अतिच्छन्दसा उद्ग्रहणामि' इत्यन्तैर्मन्त्रैः । ततस्तया इषीकया (?) मूलप्रदेशेन वाण निरुर्ध्वे उल्लिखति । अथैन छन्दोगेभ्यः प्रयच्छति । ऐआ. ५।४।१-७.

होता जपति सुपर्णोऽसि गरुत्मान् इत्यादीन् मन्त्रान् प्रस्तोत्रा प्रथमप्रतिहारकाले प्रोक्ते, महाव्रते ।५।५।३-९.

होता निष्केवल्यशसनोत्तर भक्ष्यमानीत दृष्ट्वा प्रेङ्खादवरोहेत् । ऐआ. ।२।८।१५-१८.

होता । पावमानीषु सामगाः स्तुवते, आग्नेयं होता आज्यं शसति आनुष्टुभम् । एतैता भवन्ति (ऋच) । त्रिः प्रथमा त्रिरुत्तमा । १०।५।४-७, १०.

होता प्रेङ्खमारोहति महाव्रते निष्केवल्यशसनार्थम् । शौचाचमनाद्यर्थे गमने प्राप्ते यजमानमनुज्ञाप्य गत्वा पुनरेत्य पूर्ववत् जपरहित प्रेङ्खं समारोहेत् ।५।४।११-१७.

होता प्रेङ्ख दार्ढ्यपरीक्षार्थं चालयति, स्पृहयतीजेपति, पुनश्चालयति । महाव्रते । ऐआ. ५।४।८-१०.

होता प्रेङ्खस्थः प्रस्तोतारं सञ्चारति 'पञ्चविंशस्य स्तोमस्य अर्धतृतीयासु (२॥) अर्धत्रयोदशासु(१२॥) वा (ऋक्षु) परिशिष्टासु प्रथम प्रतिहारं प्रब्रूतात्' इति । 'अर्धत्रयोदशासु प्रब्रवाचक्षत' इति जातूकर्ण्यः (आह) । ऐआ. ५।५।१-२.

होता बहिष्पवमाने सर्पेत् इत्येके, न सर्पेत् इति सिद्धान्तः । तत्रैवासीनः अनुमन्त्रयेत 'यो देवाना' इत्यादिना । अथो ब्रूयात् 'सुत्सधि सुत्र भूयासम्' इति । ८।४।१-९.

होता महाव्रते माध्यदिने चित्याग्नेरयवान् उपतिष्ठते । 'चित्याग्नेः उपस्थान' इति शब्दे द्र० । ऐआ. ५।२।१-६.

होता महाव्रते माध्यंदिने मार्जालीयहोमान् जुहोति आग्नीध्रीयहोमोत्तरम् । ऐआ. ५।१।१४-२५.

होता सौम्ये चरौ बहुलघृताक्ते छन्दोगेभ्यः प्राक् स्वा-त्म नमवेक्षेत । छन्दोगाः पूर्वमवेक्षेरन् इति के चित् । तत्र । १३।८।५.

होता हिरण्यकशिपौ (जरतारी गादीवर) आसीनः अभिषिक्ताय राज्ञे शौन शेपाख्यानमाचष्टे । ३३ । ६ । ११ १२ राजा सहस्रमाख्याभे दद्यात्, एतच्चैवासन, श्वेत च अश्वतरीरथम् । १५.

होतुः अग्निष्टोमे माध्यंदिने मरुत्वतीय शस्त्रं 'आ त्वा रथ यथोतये' इत्यादि, तदन्ते च 'जनिष्ठा उग्रः सहसे' इति सूक्तम् । ऐआ. ५।१।८ सायणः ।

होतुः अध्रिगुमन्त्रपाठः अग्नीषोमीये पशौ, तदन्ते च 'शमितारो यदत्र सुकृत' इत्यादिर्जपः । ६।६।१-१६. ६।७।१-१३.

होतुः दक्षिणा श्रोणिः (ऊरुमूल) पशुभागः सत्रे । ३१।१।२.

होतुः परिधयाज्या प्रातःसवने 'इद ते सोम्य'

मधु' ।२८।२।१। माध्यंदिने 'पिबा सोममभि यमुग्र' २८।३।७। तृतीयसवने 'इंद्र ऋभुभिर्वाजवद्भिः' २८।४।६.

होतुः महाव्रते मरुत्वतीयं शस्त्रं। चतुर्विंशात् (अधिकः) आतानः (विस्तारः–) 'अयं मे जरिनः' सूक्तं, 'पिबा सोममभि' सूक्तं, 'वय शुभा सवयसः' सूक्तं, 'मरुत्वाँ इंद्र वृषभः' सूक्तम्। सन ऊर्ध्वं च 'जनिष्ठा उग्रः सहसे' इति सूक्तेन समाप्तिः ऐआ. ५।१।८-९.

होतुः वाड्नियमः प्रातरनुवाकोचरं अन्तर्यामग्रह-होमपर्यन्तम्। उपांशुमनुमन्त्र्य अभिप्राण्य अन्तर्याममनु-मन्त्र्य अभ्यपान्य उपांशुसवनं ग्रावाणं अभिमृश्य वाचं विसृजते। ८।३।१-५.

होतुः शस्त्रजपः प्रातःसवने 'उक्थं वाचि' माध्यं-दिने 'उक्थं वाचीन्द्राय', तृतीयसवने 'उक्थं वाची-न्द्राय देवेभ्यः' इति। १२।१।२–४.

होतुः शिल्पं षष्ठेऽहनि 'इदमित्था रौद्रं' इति नाभानेदिष्ठं, तस्य अन्त्ये द्वे ऋचौ शिष्ट्वा 'ये यज्ञेन' इति नाराशंसं सूक्तमावपेत।३०।१।६-१५.

होतृचमसभक्षणात् प्राक् सवनीयपशुपुरोडाशस्य अवान्तरेडाभक्षणम्। ९।६।२-३.

होतृचमसे एकधनासु वसतीवरीषु च समवनीय-मानासु अनुवचनीया अपोनप्त्रीयासूक्ते 'आपो न देवीरुपयन्ति' इति। ८।२।९.

होतृचमसे द्विदेवत्यानां संस्रावान् समवनयति होता। ९।६।४.

होतृजपः आज्यशस्त्रकाले,उपांशु जपति,पुरा आह्वावात् जपति। १०।६।१-३। स च मन्त्रः पिता मातरिश्वा अच्छिद्रा पदाधाः इत्यादिः षड्भागः।१०।६।६-१४.

होतृजपस्य आदौ प्रयोक्तव्या आज्यशस्त्रे अक्षरपङ्क्तिः 'सु-मद्-पद्-वग्-दे' इति।८।६।२.

होतृपदस्य निर्वचनं–'स तत्र (यागे) यथाभाजनं देवताः' 'अमुमावह अमुमावह' इत्यावाहयति, तदेव होतुर्होतृत्वम्।१।२।५-७.

होतृषदनं (होतृसदनं–स्थानं) अभितः दक्षिणोत्तरौ स्थूणौ निखाय तदुपरि वीवधं (तिर्यक् स्थूलं काष्ठं) अत्यादधाति, तत्र च प्रेङ्खः। महाव्रते। ऐआ. ५।३।७.

होत्रकाः ब्रह्मा च बृसीः समारोहन्ति। महाव्रते। बृसी दर्भासनम्। ऋषीणामासनं बृसी इत्यमरः। शौचा-चमनाद्यर्थे गमने प्राप्ते यजमानमनुशाप्य गत्वा पुनरेत्य पूर्ववत् समारोहेत्। ऐआ.१।८।१३–१४. ५।४।१६.

होत्रकाः—मैत्रावरुणः, ब्राह्मणाच्छंसी, अच्छावाकः, पोता, नेष्टा, आग्नीध्रश्चेति। तथापि सामान्यतः आद्या-स्त्रयः एव भूयसा होत्रकशब्देन गृह्यन्ते। ऐआ.१।८।१३ सायणः।

होत्रकाणां अहीनसूक्तानि माध्यंदिने। मैत्रावरुणस्य 'आ सत्यो यातु मघवान्,'। ब्राह्मणाच्छंसिनः अस्मा इदु प्र तवसे। अच्छावाकस्य शासद् वह्निर्जनयन्त। तानि च चतुर्विंशे, अभिजिति, विषुवति, विश्वजिति, महाव्रते च भवन्ति गवामयने। २९।२।४–११.

होत्रकाणां परिधानीयाः प्रकृतौ अहीने च। परि-धानीयाशब्दे द्रष्टव्यम्। २७।४-५.

होत्रकाणां माध्यंदिने शस्त्रक्लृप्तिः अहर्गणेषु। २९ तमे अध्याये।

होत्रकाणां शस्त्राणि अग्निष्टोमे तृतीयसवने न सन्ति, अतिरात्रे तु सन्ति। ३०।५।१.

होत्रकाणां शस्त्रेषु आरम्भणीयाः अहर्गणेषु। मैत्रा-वरुणस्य मैत्रावरुणशस्त्रे 'ऋजुनीती नो वरुणः'। ब्राह्मणाच्छंसिनः ऐन्द्रे शस्त्रे 'इन्द्रं वो विश्वतस्परि। अच्छावाकस्य ऐन्द्राग्ने शस्त्रे यत् सोम आ सुते नरः। २७।३।१-९.

होत्रकाणां शस्त्रेषु विशेषः यः यः स्तोत्रियः, सः अद्य अनुरूपः कर्तव्यः प्रातःसवने। उत्तरयोस्तु सवनयोर्न तथा।२७।२।१–३.

होत्रा तूष्णींशंसे शस्ते कश्चिन्नोपवदेत् (उपवादो निन्दा), नानुव्याहरेत् अनुव्याहारः शापः। ९।७।६.

होत्रादयः ऋतुयाज्याः पठन्ति। २२।४।२.

होत्रादीन् मैत्रावरुणः ऋतुयाज्यार्थं प्रेष्यति अग्नि-ष्टोमे। २२।४।२.

निष्केवल्योत्तरम्। ऐआ ५।१२।६

होता अध्वर्युं पृच्छति 'अवेरपोऽध्वर्योऽऽऽउ' इति। एकधनासु होतृचमसे समवनीतासु। ८।२। १०–११.

होता अन्तर्यामग्रह आभिमन्त्रयेत 'अपान यच्छ स्वाहा त्वा सुहव सूर्याय' इति। तमपानेच (श्वास मुञ्चेत्) 'अपानापान मे य छ' इति। ८।३।१

होता आज्यशस्त्र शंसति ऋतुग्रहभक्षणादूर्ध्वम्। ऐआ १।३।१ सायण।

होता आनुष्टुभ आज्य शंसति, सामगास्तु गायत्रीषु स्तुवते। १०।५।८–११

होता उपांशुग्रह अभिमन्त्रयेत 'प्राण यच्छ स्वाहा त्वा सुहव सूर्याय' इति। तमभि प्राणेत् (ग्रहसमीपे स्वमुख नीत्वा उच्छ्वसेत्) प्राण प्राण मे यच्छ' इति। ८।३।३.

होता एक एव स्यात् प्रायणीयोदयनीययो.। २।१।२.

होता चित्याग्निप्रदेशात् सद प्रसृप्य प्रेङ्खात् पश्चात् भूमौ आसीन औदुम्बर वाणं शततन्तु (वाद्य विशेष) उभाभ्या हस्ताभ्या उन्नत (उभे) धारयति यथा वीणाम्। शतभिच्छन्दोभि चतुरुत्तरै वाणस्य स्थानानि (षड्जादिस्वरस्थानानि) उर्ध्वं उद्गृह्णीयात् (चिह्नानि कृत्वा निश्चिनुयात्) दशभिर्वा। 'गाय त्रेण त्वा छन्दसा उद्गृह्णामि' इत्यादिभि 'अति च्छन्दसा उद्गृह्णामि' इत्यन्तैर्मन्त्रै। शाखया सपलाशया मूलप्रदेशेन वाण निरूर्ध्वं उल्लिखति। अथैन छन्दोगेभ्य प्रयच्छति। ऐआ ५।४।१–७.

होता जपति सुपर्णोऽसि गरुत्मान् इत्यादीन् मन्त्रान् प्रस्तोत्रा प्रथमप्रतिहारकाले प्रोक्ते, महाव्रते। ५।५।३-९.

होता निष्केवल्यशसनोत्तर मक्षमानीत दृष्ट्वा प्रेङ्खादवरोहेत्। ऐआ. ।१।८।१५–१८

होता। पावमानीषु सामगा स्तुवते, आग्नेय होता आज्य शसति आनुष्टुभम्। एतैवा भवन्ति (ऋच)। त्रि प्रथमा त्रिरुत्तमा। १०।५।४–७, १०

होता प्रेङ्खमारोहति महाव्रते निष्केवल्यशसनार्थम्। शौचाचमनार्थं गमने प्राप्ते यजमानमनुशास्य गत्वा पुनरेत्य पूर्ववत् जपरहित प्रेङ्ख समारोहेत्। ५।४।११-१७

होता प्रेङ्ख दार्ढ्यपरीक्षार्थं चालयति, व्याहृती जपति, पुनश्चालयति। महाव्रते। ऐआ. ५।४।८–१०.

होता प्रेङ्गस्थ प्रस्तोतार सञ्चरति 'पञ्चविंशस्य स्तोमस्य अर्धतृतीयासु (२॥) अर्धत्रयोदशासु(१२॥) वा (ऋक्षु) परिशिष्टासु प्रथम प्रतिहार प्रब्रूतात्' इति। 'अर्धत्रयोदशासु प्रवाचयत' इति जातूकर्ण्य (आह)। ऐआ ५।५।१–२.

*होता रहिष्यमाणे सर्पेत् इत्येके, न सर्पेत् इति* सिद्धान्त। तत्रैवासीन अनुमन्त्रयेत 'यो देवाना' इत्यादिना। अथो ब्रूयात् 'मुखमसि मुख भूयासम्' इति। ८।४।१–९

होता महाव्रते माध्यदिने चित्याग्निरवयवान् उपतिष्ठते। 'चित्याग्न उपस्थान' इति शब्दे द्र०। ऐआ ५।२।१–६

होता महाव्रते माध्यंदिने मार्जालीयहोमान् जुहोति आग्नीध्रीयहोमोत्तरम्। ऐआ. ५।१।१४–१५.

होता सौम्ये चरौ बहुलघृताक्ते छन्दोगेभ्य प्राक् स्वा त्म नमवेक्षेत। छ दोगा पूर्वमवेक्षेरन् इति के चित्। तन्न। १३।८।५

होता हिरण्यकशिपौ (जरतारी गादीवर) आसीन अभिषिक्ताय राज्ञे शौन शेपाख्यानमाचष्टे। ३३।६। ११ १२ राजा सहस्रमाख्याने दद्यात्, एतच्चैवासन, श्वेत च अश्वतरीरथम्। १५

होतु अग्निष्टोमे माध्यदिने मरुत्वतीय शस्त्र 'आ त्वा रथ यथोतये' इत्यादि, तदन्ते च 'जनिष्ठा उग्र सहसे' इति सूक्तम्। ऐआ. ५।१।८ सायण.।

होतु अध्रिगुमन्त्रपाठ अग्नीषोमीये पशौ, तदन्ते च 'शमितारो यदत्र सुकृत' इत्यादिर्जप। ६।६।१-१६. ६।७।१–१२

होतु दक्षिणा श्रोणि (ऊरुमूल) पशुभाग' श्रवे। ३१।१।२.

होतु प्रस्थितयाज्या प्रात सवने 'इद ते सोम'

मधु' ।२८।२।१। माध्यंदिने 'पिबा सोममभि यमुग्र।' २८।३।७। तृतीयसवने 'इन्द्र ऋभुभिर्वाजवद्भिः' २८।४।६.

होतुः महाव्रते मरुत्वतीयं शस्त्रं। चतुर्विंशात् (अधिकः) आतानः (विस्तारः-) 'अस्तु मे जरितः' सूक्तं, 'पिबा सोममभि' सूक्तं, 'वय' शुभा स्वयसः' सूक्तं, 'मरुत्वाँ इन्द्र वृषभः' सूक्तम्। तत ऊर्ध्वं च 'जनिष्ठा उग्रः सहसे' इति सूक्तेन समाप्तिः ऐआ. ५।१।८-९.

होतुः वाङ्नियमः प्रातरनुवाकोत्तरं अन्तर्यामग्रह-होमपर्यन्तम्। उपांशुमनुमन्त्र्य अभिप्राण्य अन्तर्याममनुमन्त्र्य अभ्यपान्य उपांशुसवनं ग्रावाणं अभिमृश्य वाचं विसृजते। ८।३।१-५.

होतुः शस्त्रजपः प्रातःसवने 'उक्थं वाचि' माध्यंदिने 'उक्थं वाचीन्द्राय', तृतीयसवने 'उक्थं वाचीन्द्राय देवेभ्यः' इति। १२।१।२-४.

होतुः शिल्पं षष्ठेऽहनि 'इदमित्था रौद्रं' इति नाभानेदिष्ठं, तस्य अन्त्ये द्वे ऋचौ शिष्ट्वा 'ये यज्ञेन' इति नाराशंसं सूक्तमावपेत।३०।१।६-१५.

होतृचमसभक्षणात् प्राक् सवनीयपशुपुरोडाशस्य अवान्तरेडाभक्षणम्। ९।६।२-३.

होतृचमसे एकधनासु वसतीवरीषु च समवनीयमानासु अनुवचनीया अपोनप्त्रीयासूक्ते 'आपो न देवीरुपयन्ति' इति। ८।२।९.

होतृचमसे द्विदेवत्यानां संस्रावान् समवनयति होता। ९।६।४.

होतृजपः आज्यशस्त्रकाले,उपांशु जपति,पुरा आहावात् जपति। १०।६।१-३। मा च मन्त्र. पिता मातरिश्वा अच्छिद्रा पदाधाः इत्यादिः षड्भागः।१०।६।६-१४.

होतृजपस्य आदौ प्रयोक्तव्या आज्यशस्त्रे अक्षरपङ्क्तिः 'सु-मद्-पद्-वग्-दे' इति।८।६।२.

होतृपदस्य निर्वचनं-'स तत्र (यागे) यथाभाजनं देवताः' 'अमुमावह अमुमावह' इत्यावाहयति, तदेव होतुर्होतृत्वम्।१।२।५-७.

होतृषदन (होतृसदनं-स्थानं) अभितः दक्षिणोत्तरौ स्थूणौ निखाय तदुपरि वीवधं (तिर्यक् स्थूलं काष्ठं) अत्यादधाति, तत्र च प्रेङ्खः। महाव्रते। ऐआ. ५।३।७.

होत्रकाः प्लक्षा च बृसीः समारोहन्ति। महाव्रते। बृसी दर्भासनम्। ऋषीणामासनं बृसी इत्यमरः। शौचाचमनाद्यर्थे गमने प्राप्ते यजमानमनुज्ञाप्य गत्वा पुनरेत्य पूर्ववत् समारोहेत्। ऐआ.१।८।१३-१४. ५।४।१६.

होत्रकाः—मैत्रावरुणः, ब्राह्मणाच्छंसी, अच्छावाकः, पोता, नेष्टा, आग्नीध्रश्चेति। तथापि सामान्यतः आद्यास्त्रयः एव भूयसा होत्रकशब्देन गृह्यन्ते। ऐआ.१।८।१३ सायणः।

होत्रकाणां अहीनसूक्तानि माध्यंदिने। मैत्रावरुणस्य 'आ सत्यो यातु मघवान्,'। ब्राह्मणाच्छंसिनः अस्मा इदु प्र तवसे। अच्छावाकस्य शासद् वह्निर्नयन्त। तानि च चतुर्विंशे, अभिजिति, विषुवति, विश्वजिति, महाव्रते च भवन्ति गवामयने। २९।२।४-११.

होत्रकाणां परिधानीयाः प्रकृतौ अहीने च। परिधानीयाशब्दे द्रष्टव्यम्। २७।४-५.

होत्रकाणां माध्यंदिने शस्त्रक्लृप्तिः अहर्गणेषु। २९ तमे अध्याये।

होत्रकाणां शस्त्राणि अग्निष्टोमे तृतीयसवने न सन्ति, अतिरात्रे तु सन्ति। ३०।५।१.

होत्रकाणां शस्त्रेषु आरम्भणीयाः अहर्गणेषु। मैत्रावरुणस्य मैत्रावरुणशस्त्रे 'ऋजुनीती नो वरुणः'। ब्राह्मणाच्छंसिनः ऐन्द्रे शस्त्रे 'इन्द्रं वो विश्वतस्परि'। अच्छावाकस्य ऐन्द्राग्ने शस्त्रे यत् सोम आ सुते नरः। २७।३।१-६.

होत्रकाणां शस्त्रेषु विशेषः यः श्वः स्तोत्रियः, सः अद्य अनुरूपः कर्तव्यः प्रातःसवने। उत्तरयोस्तु सवनयोर्न तथा।२७।२।१-३.

होत्रा तूष्णींशंसे शस्ते कश्चिन्नोपवदेत् (उपवादो निन्दा), नानुव्याहरेत् अनुव्याहारः शापः। ९।७।६.

होत्रादयः ऋतुयाज्याः पठन्ति। २२।४।२.

होत्रादीन् मैत्रावरुणः ऋतुयाज्यार्थं प्रेष्यति अग्निष्टोमे। २२।४।२.

होमः क्षत्रिययज्ञाङ्गाभिषेकाङ्गभूत. 'ब्रह्म प्रपद्ये स्वाहा' 'क्षत्र प्रपद्ये स्वाहा'। इत्याहुतिद्वयम्। २७।३।१०.

हौत्रं ऋचैव क्रियते, यजुषा आध्वर्यव, साम्ना उद्गीथ, त्रय्या विद्यायाः शुक्रेण (व्याहृतिभिः) ब्रह्मत्वम्। २५।७।३-४.

हौण्डिनविहार. वालखिल्यानाम्। पच्छः प्रथमद्वितीयसूक्तयो', अर्धर्चशः तृतीयचतुर्थयोः सूक्तयोः, ऋक्शः पञ्चमषष्ठयोः सूक्तयोः, अष्टम सूक्त सप्तमत्वेन सप्तम चाष्टमत्वेन शस्तव्य इति। ३०।२।१-९.

॥ इति शम् ॥

---

मधुकर नारायण चापेकर यानीं आर्यसंस्कृति मुद्रणालय, लि०, १९८।१७ सदाशिव, पुणें २
येथें छापिलें व त्यांनींच आर्यसंस्कृति मुद्रणालय, लि० करितां प्रसिद्ध केलें.

# शुद्धिपत्रकम्

| पृ.-स्त.-पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|
| १।१।२७ | दितीय | द्वितीय |
| १।२।१८ | प्रैप | प्रैष |
| २।१।२३ | अभिगु | अध्रिगुः |
| २।२।२३ | पष्ट | पृष्ठ |
| ३।२।५ | मह | मह |
| ४।१।२४ | मिलित्वा | मिलित्वा सवत्सरे |
| ४।१।३४ | होत्रकाले | होत्रदोहकाले |
| ४।२।१८ | निर्वतेपत् | निर्वपेत् |
| ४।२।१५ | तिस्र. | तिस्र |
| ५।१।२६ | ईनन | ईनन |
| ५।१।२९ | अन्या | अग्न्या |
| ५।२।२ | मीय | मीये |
| ५।२।३ | यात | यात् |
| ५।२।१५ | अमीषोमीयपशो | सवनीयपशो |
| ५।२।२० | उक्थ्ये | उक्थ्ये |
| ५।२।३३ | प्रगाधः | प्रगाथ |
| ५।२।३५ | ,, | ,, |
| ६।१।१७ | विपुवति | विषुवति |
| ६।१।३५ | प्रवोमहे | प्र वो महे (ऋस. ७।२१।१०-१२) |
| ६।२।३४ | परिव्ययने | परि०याणे |
| ८।१।२२ | ६। ।६, | ६।६।६, |
| ८।१।२२ | षक्तव्यम् | वक्तव्यम् |
| ८।१।२५ | त्रिर्ब्रूदयात् | त्रिर्ब्रूयात् |
| ८।२।२ | णेण | येन |
| ८।२।२१ | आभिगो | अध्रिगो |
| ९।२।११ | प्रतिष्टा | प्रतिष्ठा |
| ९।२।२७ | ऋगूद | ऋग्द |

| पृ. स्त.-पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|
| ९।२।३२ | ऋकृश | ऋक्शः |
| १०।१।२ | याज्यावषट् | याज्यामनुवषट् |
| १०।२।८ | होममर्यन्त | होमपर्यन्त |
| १०।२।२९ | अन्यतरात् | अन्यतरस्मात् |
| १०।२।३२ | पारिकल्प्य | परिकल्प्य |
| ११।१।२७ | स्यसख्या शेष | स्य सख्याविशेष |
| ११।२।१ | छन्दस्काया | छन्दस्कया |
| ११।२।३३ | ऐन्द्रामहा | ऐन्द्रमहा |
| १२।१।११ | ,, | ,, |
| १२।१।१४ | सोम राशी | सोमराशी |
| १२।२।१४ | मदिष्ठया | मदिष्ठया |
| १३।१।१३ | हित० | हित |
| १३।२।१२ | ममाभि | मेमाभि |
| १४।१।११ | केरीति | करोति |
| १४।१।३३ | शाड्क्ष | शाङ्क्ष |
| १४।२।२७ | अष्टाभि | अष्टाभि |
| १६।१।४ | वीना | वीना, |
| १६।२ १० | धानीयया | धानीया |
| १६।२।१२ | इयामिन्द्रव | इयमिन्द्र इ |
| १६।२।१७ | रिधीया | रिधानीयाः |
| १६।२।२२ | नून | नून |
| १७।१।३२ | सार्या | सार्था |
| ,,।२।९ | पत्– | पत् |
| ,,।,,।२८ | अग्नि | आग्नि |
| ,,।,,।३३ | करत्य | करत्य– |
| १८।२।५ | वेदस्यो | वेदस्या |
| ,,।,,।९ | वेदस्यजा | वेदस्या जा |
| | वदस्रा, | वदसे, |

| पृ.-स्तं.-पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|
| १९।१।४ | प्रात सवने | प्रातःसवने |
| ,,।,,।२० | सगाद् | समाद |
| ,,।,,।२२ | इात | इति |
| ,, | चतस्रः | चतस्रः |
| ,,।२।४ | दिन्दुमतौ | दिन्दुमन्तौ |
| ,,।,,।१४ | पूर्वमीजा | पूर्वमनीजा |
| २१।१।२४ | गपाशु | गभाशु |
| ,,।,,।३४ | घोमे | घोमीये |
| ,,।२।२९ | ज्य ष्ठे | ज्येष्ठ |
| २२।१।३१ | प्राङःमु | प्राङ्मु |
| ,,।२।२७ | ष्ठामना | ष्ठभिन्ना |
| २३।१।२४ | आरण्यनोग्निना | आरण्येनाग्निना |
| ,,।,,।२७ | गविष्ठ्ये | गविष्टये |
| ,,।२।२ | उक्थ्ये | उक्थ्ये |
| ,,।,,।३ | चर्पणी धृत | चर्षणीधृतं |
| ,,।,,।९ | छान्दसा | छन्दसा |
| ,,।,,।२२ | जरितृणा | जरितृणा |
| २४।१।१ | पृष्ठये | पृष्ठये |
| ,,।,,।६ | मेहऽनि | मेऽहनि |
| ,,।,,।९ | इत्येकं चतुर्ऋच, उप | इत्येक (१-१२), चतुर्ऋच उप |
| ,,।,,।१० | स्वादिष्ठया | स्वादिष्ठया |
| ,,।,,।१८ | नर्यो | नर्यो |
| २४।१।२९ | यश्चिद्धि | याचिद्धि |
| ,,।,,।३२ | हि द्याः | हि द्यौः |
| २५।१। ८ | समरेषु | संभारेषु |
| ,,।,,।१२ | कऽपि | केऽपि |
| ,,।,,।२२ | क्षत्रिय यज्ञे | क्षत्रिययज्ञे |
| ,,।,,।२३ | राहेतु | रोहतु |
| २५।१।३४ | पुर | पुर– |
| ,,।२।२६ | आहावः | आहावः |
| ,,।,,।२७ | अध्वर्यो | अध्वर्यो |
| ,, | ,, | ,, |
| २६।१।१३ | प्रवासे, | प्रवासे |
| ,,।२।१४ | सायाणः | सायणः |
| ,,।,,।२९ | निष्वैव | निष्केव |
| ,,।,,।३२ | दष्टया | दष्टया |
| ,,।,,।३४ | उक्यप | उक्थ्यप |
| ,,।,,।३५ | मैत्रव | मैत्राव |
| २७।१।१४ | मैत्र वरुणः | मैत्रावरुणः |
| ,,।,,।१७ | च्छसी | च्छंसी |
| ,,।,,।२१ | गिवर्णः | गिर्वणः |
| ,,।,,।३० | उर्ध्वं | ऊर्ध्वं |
| ,, | उर्ध्वानः | ऊर्ध्वो नः |
| ,,।,,।३५ | सिमधं | समिधं |
| ,, | आम्यु | अम्यु |
| ,,।२। ५ | वेदी नाभिः | वेदीनाभिः |
| ,,।,,।१५ | समिष्टयस्तु | समिष्टयजु |
| २८।१।३१ | सभेदात् | संभेदात् |
| ,,।२।१८ | ऋचः | ऋचः |
| ,,।,,।२१ | वसिष्ठः | वसिष्ठः |
| ,,।,,।२५ | स मदे | सामदे |
| ,,।,,।२९ | गातृणा | गातृणा |
| २९।१।२८ | मन्दः | मन्द्रः |
| ,,।२।१२ | वम्र | वतम्र |
| ,, | अग्नीध्रः | आग्नीध्रः |
| ,,।,,।१६ | ष्टेमे | ष्टोमे |
| ३०।१।११ | वृंध | वृधन् |
| ,,।,,।२४ | शसेत् | शंसेत् |
| ,,।,,।३४ | , १ २।१ | , २।१ |
| ,,।२।१० | ऋचा | ऋचा |
| ,,।,,।१६ | दक्षमा | दक्षमा |
| ३१।,,।१।६ | कर्तृणा | कर्तृणा |
| ,,।२।१२ | प्रतिस | प्रातिस |
| ,,।,,।२९ | यज्ञाङ्गः | यज्ञाङ्गम् |
| ३२।१।१४ | परिक्षितः | पारिक्षितः |

